# निवेदनम्

स्वदेशीयानां विदेशीयानां च तासां तासां भाषाणां प्रचाराय यथा विविधाभिः संस्थाभिः परीक्षाः प्रचाल्य प्रयत्यते, तद्वदेव संस्कृतभाषायाः प्रचाराय सर्वजनसाधारणतया रुच्युत्पादनाय च **टिळक-महाराष्ट्र-विद्या-पीठेन** अयं नवीनः परीक्षोपक्रमः कृतः। इदंप्रथमतया प्रवृत्तास्वप्येतासु परीक्षासु अष्टवर्षात्मके काले प्रायशः पञ्चसप्ततिसहस्रसंख्याकानां विद्यार्थिनां प्रवेशो जातः। तेन चैषा परीक्षापद्धतिः विद्यार्थिजनप्रिया भवेदिति निःसन्देहमवधार-यितुं शक्यते। विषयसौलभ्येनापेक्षितक्रमबद्धत्वेन च एतास्वेव परीक्षासु विद्यार्थिनां नितरामादरो दृश्यत इति प्रमोदावहम्।

संस्कृतभाषाचतुर्थपरीक्षायाः इदं पाठ्यपुस्तकं प्रकाश्यते। अस्मिंश्च पुस्तके उद्धृतानां पाठानां विषयविविधत्वानुसारेण प्रायशः सर्वस्यैव संस्कृतवाङ्मयस्य परिचयः कारितः। तत्तत्पाठोपक्रमे च प्रसिद्धानां तत्तद्ग्रन्थकाराणां जन्म-देशकालादिविषये संक्षेपतो निर्देशः कृतः। तथैव तत्तत्पाठे प्रतिपाद्यमानस्य विषयस्य वैशिष्ट्यं, यथासम्भवं पूर्वापरसन्दर्भः कठिनशब्दार्थबोधिकाष्टि-प्पण्यश्चेत्येवमादिकमतीव सरलभाषया प्रतिपादितम्। अपि च पाठान्ते विद्यार्थिबुद्धिवैशद्यकारिणः प्रश्ना अपि परीक्षाधोरणीमाधुनिकीं पद्धतिं चानु-सृत्य विन्यस्ताः। पाठेषु च क्वचित् क्वचित् मूलग्रन्थे विद्यमानाया रचनायाः सौलभ्यदृष्ट्या, सामञ्जस्यदृष्ट्या चापेक्षितोऽन्यथाभावः स्वातन्त्र्येण मूलार्थ-सौन्दर्याविरोधेन कृतः। पुस्तकान्ते च परिशिष्टभागे आवश्यकं छन्दो-विज्ञानम् उपयुक्तानि व्याकरणसूत्राणि च समुल्लिखितानि, अत एवैषा सुतरामभिनवा पुस्तकरचना सर्वेषामपि संस्कृतविद्यादरवतां जनानां महोपयोग-कारिणी भवेत् इति विश्वसिमः। तदिदं विद्यादेवतासमाराधनरूपं कार्यं श्रीसरस्वतीकृपाकटाक्षवशेन संस्कृतविद्याभिमानिजनतासाहाय्येन च परिपूर्णतां यायादिति बाढमाशास्महे।

**संस्कृत-विद्या-मण्डलम्, टिळक-महाराष्ट्र-विद्यापीठम्, पुणें २.**

टिळक–महाराष्ट्र–विद्यापीठ–प्रकाशनम्

* विद्यादेवीमुपास्महे *

# गद्य–पद्य–माला

## चतुर्थं कुसुमम्

( टिळक–महाराष्ट्र–विद्यापीठस्य संस्कृत भाषा ' चतुर्थ ' परीक्षार्थं नियुक्तं पाठ्यपुस्तकम् )



मूल्यम् सपादरूपकः

१८७७ आषाढ शु. १ ] प्रथमं मुद्रणम् [ २१–६–५५

: प्रकाशक :

श्री. चिं. ग. काशीकर

श्री. वा. बा. भागवत

( मन्त्री संस्कृत–विद्या–मंडळ )

टिळक महाराष्ट्र विद्यापीठ

५२१ सदाशिव, पुणें २.

: मुद्रक :

द. शं. गांगण

अक्षर मुद्रणालय,

४३८ अ सदाशिव, पुणें २.



# पाठानुक्रमः



*सार्थकण्ठपाठार्थं नियुक्तानि ।

# १ अजविलापः

**परिचयः**— कविकुलगुरोः कालिदासस्य कालनिर्णयादिविषये यद्यपि नाद्यावधि निश्चयेन केनापि निर्णीतं तथापि महाकविरयं क्रिस्ताब्दस्य चतुर्थ-शतके सञ्जात इति मतं बहुभिरैतिह्यविद्भिरङ्गीकृतप्रायमेव विद्यते। अस्य निवासस्थानादिविषये पुनर्वङ्गकाश्मीरविदर्भादिदेशीया जनास्तं स्वस्वदेशोद्भवमेव प्रतिपादयन्तीत्ययमेक एव विषयोऽस्य सर्वजनीनं माहात्म्यं विशदयति। पञ्चसु महाकाव्येषु रघुवंशकुमारसम्भवे क्रमेणैवाद्यं द्वितीयं च स्थानं सम्पाद्याप्यात्मनोऽद्वितीयतामाविर्भावयन्ती रसिकजनस्वान्तानि सन्ततनवरससुधावर्षेण सन्तोषयत इति सर्वेषामनुभवगोचरमेव।

तत्र रघुवंशस्याष्टमे सर्गे महाकविनैतेन '**कारुण्यं भवभूतिरेव तनुते**' इति भाविनं विद्वत्प्रवादमसहमानेनेव विरचितमिन्दुमतीविनाशदुःखनिमित्तमजस्य शोकप्रसङ्गं श्रुतिगोचरं कृत्वा जना यत्सत्यम् '**अपि ग्रावा रोदित्यपि दलति वज्रस्य हृदयम्**' इति भवभूतिवचोऽनुभवन्ति। एवं च शृङ्गारादिष्विव करुणेऽपि रसेऽस्य वर्णनकौशलमसाधारणमिति वयं प्रतीमः।

सर्गेऽस्मिन्निन्दुमत्याः पत्युर्मानसमिव प्रासादप्रवेशमारभ्याचिताप्रवेशं कविनोपवर्णितः कथाप्रसङ्गो नितरां हृदयङ्गमः। '**अहमेव मतो महीपतेः**' इति प्रकृतिमतं प्रकटयता कविना पुरातना राजानः प्रजासु, प्रजाश्च राजसु कीदृशीं वृत्तिमधारयन्निति ज्ञाप्यते। 'अजविलाप' इति स्वनामान्वर्थयति सर्गेऽस्मिन् कविनोपवर्णितमिन्दुमतीमरणं कस्य वा सहृदयस्य हृदयं न करुणरसपरिप्लुतं करोति? '**विहगाः** (अपि) **कमलाकरालयाः समदुःखा इव तत्र चुक्रुशुः**' इति तु कविः स्वयमेव वर्णयति। मृतमुद्दिश्य गुणस्मरणतत्परं मानवमनः भूतवर्तमानभविष्यत्स्वपि कालेषु कथं समानमेव विद्यते इति वयमजकृतेनेन्दुमतीगुणकृत्यादिस्मरणपूर्वकशोकेन जानीमहे।

प्रियाविनाशदुःखितमजमुपसान्त्वयितुं गुरुणा वसिष्ठेन प्रहितः सन्देशस्तु निखिलमानवजातिमुद्दिश्यैव कृत इवाभाति। एतेन 'व्यवहारविदे ऽपि काव्यं कथमुपकारीति ज्ञातुं सुशकम्। '**रुदता कुत एव सा पुनर्भवता नानुमृतापि लभ्यते**' '**स्वजनाश्रु किलातिसन्ततं दहति प्रेतमिति प्रचक्षते**', '**मरणं प्रकृतिः शरीरिणाम्**' इत्यादीनि गुरुवचांसि संसारस्य असारतां सुखदुःखस्य च चक्रनेमिक्रमं प्रतिपाद्य मानवं स्वस्वकर्मणि प्रवर्तयितुमलमित्यत्र न सन्देहावकाशः।

तदेतमष्टमसर्गोद्धृतं करुणरसपरिप्लुतं परिच्छेदमास्वाद्य पाठकाः निखिलमप्यष्टमं सर्गं रसिकतया पठेयुरेवेति द्रढीयानस्माकं विश्वासः।

**अथ तस्य [1]विवाहकौतुकं ललितं बिभ्रत एव पार्थिवः।**
**वसुधामपि हस्तगामिनीमकरोदिन्दुमतीमिवापराम् ॥१॥**
**दुरितैरपि कर्तुमात्मसात्[2] प्रयतन्ते नृपसूनवो हि यत्।**
**तदुपस्थित[3]मग्रहीदजः पितुराज्ञेति न भोगतृष्णया ॥२॥**
**रघुमेव [4]निवृत्तयौवनं तममन्यन्त नवेश्वरं प्रजाः।**
**स हि तस्य न केवलां श्रियं प्रतिपेदे सकलान् गुणानपि ॥३॥**
**अहमेव मतो महीपतेरिति सर्वः [5]प्रकृतिष्वचिन्तयत्।**
**उदधेरिव निम्नगाशतेष्वभवन्नास्य विमानना[6] क्वचित् ॥४॥**
**न खरो न च भूयसा मृदुः [7]पवमानः पृथिवीरुहामिव।**
**स पुरस्कृतमध्यमक्रमो नमयामास नृपाननुद्धरन् ॥५॥**
**अथ वीक्ष्य रघुः प्रतिष्ठितं प्रकृतिष्वात्मजमात्मवत्तया।**
**विषयेषु विनाशधर्मसु [8]त्रिदिवस्थेष्वपि निःस्पृहोऽभवत् ॥६॥**

---

१ विवाहमङ्गलं विवाहसूत्रं वा। कौतुकं मङ्गले हर्षे हस्तसूत्रे कुतूहले (शाश्वतकोषः), २ स्वाधीनम्, तदधीनवचने- (पा. ५-४-५४) इति सातिप्रत्ययः। ३ स्वतः प्राप्तम्, ४ प्रत्यावृत्तयौवनम्, ५ प्रजासु, ६ तिरस्कारः, ७ वायुः। ८ स्वर्गस्थेषु.

प्रशमस्थितपूर्वपार्थिवं कुलमभ्युद्यतनूतनेश्वरम् ।
नभसा निभृतेन्दुना तुलामुदितार्केण समारुरोह तत् ॥७॥
यतिपार्थिवलिङ्गधारिणौ ददृशाते रघुराघवौ जनैः ।
[1]अपवर्गमहोदयार्थयोर्भुवमंशाविव धर्मयोर्गतौ ॥८॥
अजिताधिगमाय मन्त्रिभिर्युयुजे नीतिविशारदैरजः ।
अनपायिपदोपलब्धये रघुराप्तैः[2] समियाय योगिभिः ॥९॥
न नवः प्रभुराफलोदयात् स्थिरकर्मा[3] विरराम कर्मणः ।
न च [4]योगविधेर्नवेतरः स्थिरधीरापरमात्मदर्शनात्[5] ॥१०॥
इति शत्रुषु चेन्द्रियेषु च प्रतिषिद्धप्रसरेषु जाग्रतौ ।
प्रसितावुदयापवर्गयोरुभयीं सिद्धिमुभाववापतुः ॥११॥
अथ काश्चिदजव्यपेक्षया[6] गमयित्वा समदर्शनः समाः ।
तमसः [7]परमापदव्ययं पुरुषं योगसमाधिना रघुः ॥१२॥
अकरोत्स [8]तदौर्ध्वदेहिकं पितृभक्त्या पितृकार्यकल्पवित् ।
न हि तेन पथा तनुत्यजस्तनयावर्जितपिण्डकांक्षिणः ॥१३॥
स [9]परार्ध्यगतेरशोच्यतां पितुरुद्दिश्य सदर्थवेदिभिः ।
शमिताधिरधिज्यकार्मुकं कृतवानप्रतिशासनं[10] जगत् ॥१४॥
क्षितिरिन्दुमती च भामिनी पतिमासाद्य तमग्र्यपौरुषम् ।
प्रथमा बहुरत्नसूरभूदपरा वीरमजीजनत् सुतम् ॥१५॥

---

१ **अपवर्गः**—मोक्षः **महोदयः**—अभ्युदयः ( यतोऽभ्युदयनिःश्रेयससिद्धिः स धर्मः । स च द्विविधः प्रवर्तको, निवर्तकश्च ), २ **आप्तः**—यथार्थवादी यथार्थदर्शी च । ३ फलोदयपर्यन्तं कर्मकारी, ४ योगाभ्यासात्, ऐक्यानुसन्धानात्, ५ परमात्मसाक्षात्कारात्, ६ **व्यपेक्षा**—आकांक्षा, अनुरोधः, ७ परमापदव्ययम्— परम् + आपत् ( प्राप ) + अव्ययम् इति पदच्छेदः, ८. तिलोदकपिण्डदानादिकम्, ९ प्रशस्तगतेः प्राप्तमोक्षस्य, १० द्वितीयाज्ञारहितम्, आत्माज्ञाविधेयम्.

[1]दशरश्मिशतोपमद्युतिं यशसा दिक्षु दशस्वपि श्रुतम् ।
[2]दशपूर्वरथं यमाख्यया दशकण्ठारिगुरुं विदुर्बुधाः ॥१६॥
ऋषिदेवगणस्वधाभुजां[3] [4]श्रुतयागप्रसवैः स पार्थिवः ।
अनृणत्वमुपेयिवान् बभौ [5]परिधेर्मुक्त इवोष्णदीधितिः ॥१७॥
बलमार्तभयोपशान्तये विदुषां सत्कृतये बहु श्रुतम् ।
वसु तस्य विभोर्न केवलं गुणवत्तापि परप्रयोजना ॥ १८ ॥
स कदाचिदवेक्षितप्रजः सह देव्या विजहार सुप्रजाः ।
नगरोपवने शचीसखो[6] मरुतां पालयितेव नन्दने ॥१९॥
अथ रोधसि दक्षिणोदधेः [7]श्रितगोकर्णनिकेतमीश्वरम् ।
उपवीणयितुं ययौ रवेरुदगावृत्तिपथेन नारदः ॥२०॥
कुसुमैर्ग्रथितामपार्थिवैः [8]स्रजमातोद्यशिरोनिवेशिताम् ।
अहरत् किल तस्य वेगवानधिवासस्पृहयेव[9] मारुतः ॥२१॥
भ्रमरैः कुसुमानुसारिभिः परिकीर्णा परिवादिनी मुनेः ।
ददृशे पवनावलेपजं सृजती बाष्पमिवाञ्जनाविलम् ॥२२॥
अभिभूय विभूतिमार्तवीं[10] मधुगन्धातिशयेन वीरुधाम् ।
नृपतेरमरस्रगाप सा दयितोरःस्थलकोटिषु स्थितिम् ॥२३॥
क्षणमात्रसखीं सुजातयोः स्तनयोस्तामवलोक्य विह्वला ।
निमिमील[11] नरोत्तमप्रिया हृतचन्द्रा तमसेव कौमुदी ॥२४॥

---

१ सूर्योपमम्, २ दशपूर्वो दशशब्दपूर्वो रथो रथशब्दो यस्य सः दशरथः, ३ **स्वधाभुजः**– पितरः, ४ अध्ययनयज्ञसन्तानैः, ५ परिवेषात्, ६ इन्द्रः, ७ अधिष्ठितगोकर्णाख्यस्थानम्, शिवम्, ८ **आतोद्यं** वाद्यम्, ९ संस्कारो गन्धमाल्याद्यैरधिवासनमुच्यते. १० ऋतुसम्बन्धिनीम्, ११ ममार.

वपुषा करणोज्झितेन सा निपतन्ती पतिमप्यपातयत् ।
ननु [1]तैलनिषेकबिन्दुना सह दीपार्चिरुपैति मेदिनीम् ॥२५॥
उभयोरपि पार्श्ववर्तिनां तुमुलेनार्तरवेण वेजिताः ।
विहगाः [2]कमलाकरालयाः समदुःखा इव तत्र चुक्रुशुः ॥२६॥
नृपतेर्व्यजनादिभिस्तमो नुनुदे सा तु तथैव संस्थिता[3] ।
प्रतिकारविधानमायुषः सति शेषे हि फलाय कल्पते ॥२७॥
[4]प्रतियोजयितव्य[5]वल्लकीसमवस्थामथ सत्त्वविप्लवात् ।
स निनाय नितान्तवत्सलः परिगृह्योचितमङ्कमङ्गनाम् ॥२८॥
विललाप स बाष्पगद्गदं सहजामप्यपहाय धीरताम् ।
अभितप्त[6]मयोऽपि मार्दवं भजते कैव कथा शरीरिषु ॥२९॥
कुसुमान्यपि गात्रसङ्गमात् प्रभवन्त्यायुरपोहितुं[7] यदि ।
न भविष्यति हन्त साधनं किमिवान्यत् प्रहरिष्यतो विधेः ॥३०॥
अथवा मृदु वस्तु हिंसितुं मृदुनैवारभते प्रजान्तकः ।
हिमसेकविपत्तिरत्र मे नलिनी पूर्वनिदर्शनं मता ॥३१॥
स्रगियं यदि जीवितापहा हृदये किं निहिता न हन्ति माम् ।
विषमप्यमृतं क्वचिद्भवेदमृतं वा विषमीश्वरेच्छया ॥३२॥
अथवा मम भाग्यविप्लवादशनिः[8] कल्पित एष वेधसा ।
यदनेन तरुर्न पातितः क्षपिता तद्विटपाश्रिता लता ॥३३॥
कृतवत्यसि नावधीरणामपराद्धेऽपि यदा चिरं मयि ।
कथमेकपदे निरागसं जनमाभाष्यमिमं न मन्यसे ॥३४॥
मनसापि न विप्रियं मया कृतपूर्वं तव किं जहासि माम् ।
ननु शब्दपतिः क्षितेरहं त्वयि मे भावनिबन्धना रतिः ॥३५॥

---

१ तैलनिषेकः—क्षरत्तैलम्, २ कमलाकरः आलयः येषां ते, ३ मृता, ४ प्रतियोजयितव्या तन्त्रीभिर्योजयितव्या, ५ वीणा, ६ लोहम्, ७ अपहर्तुम्. ८ वैद्युतः अग्निः.

कुसुमोत्खचितान् [1]वलीभृतश्चलयन् [2]भृङ्गरुचस्तवालकान् ।
करभोरु करोति मारुतस्त्वदुपावर्तनशङ्कि मे मनः ॥३६॥
तदपोहितुमर्हसि प्रिये प्रतिबोधेन विषादमाशु मे ।
ज्वलितेन गुहागतं तमस्तुहिनाद्रेरिव नक्तमोषधिः ॥३७॥
शशिनं पुनरेति शर्वरी दयिता द्वन्द्वचरं पतत्रिणम् ।
इति तौ विरहान्तरक्षमौ कथमत्यन्तगता न मां दहेः ॥३८॥
नवपल्लवसंस्तरेऽपि ते मृदु दूयेत यदङ्गमर्पितम् ।
तदिदं विषहिष्यते कथं वद वामोरु चिताधिरोहणम् ॥३९॥
कलमन्यभृतासु भाषितं कलहंसीषु मदालसं गतम् ।
[3]पृषतीषु विलोलमीक्षितं पवनाधूतलतासु विभ्रमाः ॥४०॥
त्रिदिवोत्सुकयाप्यवेक्ष्य मां निहिताः सत्यममी गुणास्त्वया ।
विरहे तव मे गुरुव्यथं हृदयं न त्ववलम्बितुं क्षमाः ॥४१॥
मिथुनं परिकल्पितस्त्वया सहकारः [4]फलिनी च नन्विमौ ।
अविधाय विवाहसत्क्रियामनयोर्गम्यत इत्यसाम्प्रतम् ॥४२॥
कुसुमं कृतदोहदस्त्वया यदशोकोऽयमुदीरयिष्यति ।
अलकाभरणं कथं नु तत्तव नेष्यामि [5]निवापमाल्यताम् ॥४३॥
समदुःखसुखः सखीजनः प्रतिपच्चन्द्रनिभोऽयमात्मजः ।
अहमेकरसस्तथापि ते व्यवसायः [6]प्रतिपत्तिनिष्ठुरः ॥४४॥
गृहिणी सचिवः सखी मिथः प्रियशिष्या ललिते कलाविधौ ।
करुणाविमुखेन मृत्युना हरता त्वां वद किं न मे हृतम् ॥४५॥
विलपन्निति कोसलाधिपः करुणार्थग्रथितं प्रियां प्रति ।
अकरोत् पृथिवीरुहानपि स्रुतशाखारसबाष्पदूषितान् ॥४६॥

---

१ कुटिलान्, २ नीलान्, ३ हरिणीषु, ४ प्रियङ्गुलता, ५ पितृदानम्,
६ प्रतिपत्तिः— निश्चयः.

अथ तस्य कथंचिदङ्कतः स्वजनस्तामपनीय सुन्दरीम् ।
विससर्ज तदन्त्यमण्डनामनलायागुरुचन्दनैधसे[1] ॥४७॥
प्रमदामनुसंस्थितः शुचा नृपतिः सन्निति वाच्यदर्शनात् ।
न चकार शरीरमग्निसात् सह देव्या न तु जीविताशया ॥४८॥
अथ तेन दशाहतः परे गुणशेषामपदिश्य भामिनीम् ।
विदुषा विधयो महर्धयः पुर एवोपवने समापिताः ॥४९॥
स विवेश पुरीं तया विना [2]क्षणदापायशशाङ्कदर्शनः ।
परिवाहमिवावलोकयन् स्वशुचः पौरवधूमुखाश्रुषु ॥५०॥
अथ तं [3]सवनाय दीक्षितः [4]प्रणिधानात् गुरुराश्रमस्थितः ।
अभिषङ्गजडं[5] विजज्ञिवानिति शिष्येण किलान्वबोधयत् ॥५१॥
असमाप्तविधिर्यतो मुनिस्तव विद्वानपि तापकारणम् ।
न भवन्तमुपस्थितः स्वयं प्रकृतौ स्थापयितुं पथश्च्युतम् ॥५२॥
मयि तस्य सुवृत्त वर्तते लघुसन्देशपदा सरस्वती ।
शृणु विश्रुतसत्त्वसार तां हृदि चैनामुपधातुमर्हसि ॥५३॥
चरतः किल दुश्चरं तपस्तृणबिन्दोः[6] परिशंकितः पुरा ।
प्रजिघाय समाधिभेदिनीं हरिरस्मै हरिणीं सुराङ्गनाम् ॥५४॥
स तपःप्रतिबन्धमन्युना प्रमुखाविष्कृतचारुविभ्रमाम् ।
अशपद्भव मानुषीति तां [7]शमवेलाप्रलयोर्मिणा भुवि ॥५५॥
भगवन् परवानयं जनः प्रतिकूलाचरितं क्षमस्व मे ।
इति चोपनतां क्षितिस्पृशं[8] कृतवानासुरपुष्पदर्शनात् ॥५६॥
क्रथकैशिकवंशसंभवा तव भूत्वा महिषी चिराय सा ।
उपलब्धवती दिवश्च्युतं विवशा शापनिवृत्तिकारणम् ॥५७॥

---

१ अगुरुचन्दनम् एधः इन्धनं यस्य तस्मै, २ रात्रिः, ३ यागाय, ४ ध्यानात्, चित्तैकाग्र्यात्, ५ दुःखमोहितम्, ६ **तृणबिन्दुः** नाम कश्चन महर्षिः, ७ **शमवेलाप्रलयोर्मिः**– प्रलयकालतरङ्गः–शमविघातकः ८ मानुषीम्,

तदलं तदपायचिन्तया विपदुत्पत्तिमतामुपस्थिता ।
वसुधेयमवेक्ष्यतां त्वया वसुमत्या हि नृपाः कलत्रिणः ॥५८॥
रुदता कुत एव सा पुनर्भवता नानुमृतापि लभ्यते ।
परलोकजुषां स्वकर्मभिर्गतयो भिन्नपथा हि देहिनाम् ॥५९॥
अपशोकमनाः कुटुम्बिनीमनुगृण्हीष्व निवापदत्तिभिः[1] ।
स्वजनाश्रु किलातिसंततं दहति प्रेतमिति प्रचक्षते ॥६०॥
मरणं प्रकृतिः शरीरिणां विकृतिर्जीवितमुच्यते बुधैः ।
क्षणमप्यवतिष्ठते श्वसन्यदि जन्तुर्ननु लाभवानसौ ॥६१॥
स्वशरीरशरीरिणावपि श्रुतसंयोगविपर्ययौ यदा ।
विरहः किमिवानुतापयेद्वद बाह्यैर्विषयैर्विपश्चितम् ॥६२॥
न पृथग्जनवच्छुचो वशं वशिनामुत्तम गन्तुमर्हसि ।
द्रुमसानुमतां किमन्तरं यदि वायौ द्वितयेऽपि ते चलाः ॥ ६३ ॥
स तथेति विनेतुरुदारमतेः प्रतिगृह्य वचो विससर्ज मुनिम् ।
तदलब्धपदं हृदि शोकघने प्रतियातमिवान्तिकमस्य गुरोः ॥६४॥

तीर्थे तोयव्यतिकरभवे जह्नुकन्यासरय्वो–
देहत्यागादमरगणनालेख्यमासाद्य सद्यः ।
पूर्वाकाराधिकतररुचा संगतः कान्तयाऽसौ
लीलागारेष्वरमत पुनर्नन्दनाभ्यन्तरेषु ॥६५॥

**प्रश्नाः**– (१) प्रजाः अजं रघुमेवामन्यन्त इत्यत्र कानि कारणानि ? (२) इन्दुमन्त्या विनाशस्य कारणं किम् ? (३) अजः इन्दुमन्त्याः कान् कान् गुणान् स्मरति ? (४) अजस्य विलापं वर्णयत । (५) वसिष्ठस्य सन्देशं सुरगिरा वर्णयत ।

---

१. पिण्डोदकदानैः ।

# २ यक्षगृहम्

**परिचयः**— कालिदासविरचितं मेघदूतं नाम काव्यं किं खण्डकाव्य-माहोस्विन्महाकाव्यमिति बहूनां संस्कृतसाहित्यविदां विवादास्पदमयं विषयः। साहित्यदर्पणकर्ता विश्वनाथस्तु 'खण्डकाव्यं भवेत्काव्यस्यैकदेशानुसारि च' इति खण्डकाव्यलक्षणं विधायोदाहरति 'यथा मेघदूतादिः इति। 'सर्गबन्धो महाकाव्यम्' इति लक्षणं यद्यपि नात्र काव्ये सुसंगच्छते तथापि महाकाव्य-स्यान्यानि लक्षणानि अत्र प्रतिपाद्य स्थिरदेवाख्येन केनचित् पण्डितेनास्य महाकाव्यत्वमेवोररीकृतम्। यथाकथं वा भवतु। महाकाव्यलक्षणोपेतेऽपि लघुकाव्येऽस्मिन् ताँस्तान् विषयान् वर्णयता कविना स्वीयासाधारणी प्रतिभाऽविष्कृतेत्यत्र न सन्देहः।

कान्ताविरहगुरुणा दुःखेनाभिभूतः कश्चित् यक्षो वियन्मार्गेण प्रयान्तं वारिवाहमवलोक्य तमेव स्वसंदेशवाहकं विधाय प्रियायै कुशलं निवेदयतीति अद्भुतरमणीयेयं कल्पना '**कामार्ता हि प्रकृतिकृपणाश्चेतनाचेतनेषु**' इति मानुषं स्वभावमेव व्यवस्थापयति। सन्देशवाहनकर्मणि मेघं याचमानो यक्षः '**याच्ञा मोघा वरमधिगुणे नाधमे लब्धकामा**' इत्यादिभिर्वचो-भिस्तमात्मीयं श्रेष्ठं सुहृदं कल्पयित्वा यद् भाषते तेन सुकवेर्वाक्षु जनानां वशीकरणसामर्थ्यं कीदृग्वर्तते इति वयं प्रतीमः।

न केवलं मानुषसुलभानां भावानां सुबोधतयाऽविष्कारे किन्तु तेषां तेषां निसर्गरमणीयस्थलानां शब्दैश्चित्रणेऽप्यस्याधारणमेव कौशल्यम्। मेघदूते कविना विरचिता यक्षगृहवर्णनपरा एव षट् श्लोका अत्रोद्धृताः। श्लोकानेतान् पठित्वा यक्षगृहं किं चित्ररूपेण साक्षादेव वास्मत्पुरत आविर्भूतमिति मन्यामहे।

तत्रागारं धनपतिगृहानुत्तरेणास्मदीयं
दूराल्लक्ष्यं सुरपतिधनुश्चारुणा तोरणेन ।
यस्योपान्ते कृतकतनयः कान्तया वर्धितो मे
हस्तप्राप्यस्तबकनमितो बालमन्दारवृक्षः ॥१॥

वापी चास्मिन् मरकतशिलाबद्धसोपानमार्गा
हैमैस्स्फीता विकचकमलैर्दीर्घवैडूर्यनालैः ।
यस्यास्तोये कृतवसतयो मानसं संन्निकृष्टं
नाध्यास्यन्ति व्यपगतशुचस्त्वामपि प्राप्य हंसाः ॥२॥

तस्यास्तीरे विहितशिखरः पेशलैरिन्द्रनीलैः
क्रीडाशैलः कनककदलीवेष्टनप्रेक्षणीयः ।
मद्गेहिन्याः प्रिय इति सखे चेतसा कातरेण,
प्रेक्ष्योपान्तस्फुरिततडितं त्वां तमेव स्मरामि ॥३॥

रक्ताशोकश्चलकिसलयः केसरश्चात्र कान्तः,
प्रत्यासन्नौ [1]कुरबकवृतेर्माधवीमण्डपस्य ।
एकः सख्यास्तव सह मया वामपादाभिलाषी,
कांक्षत्यन्यो वदनमदिरां दोहदच्छद्मनास्याः ॥४॥

तन्मध्ये च स्फटिकफलका काञ्चनी वासयष्टि-
र्मूले बद्धा मणिभिरनतिप्रौढवंशप्रकाशैः ।
तालैः [2]शिञ्जावलयसुभगैः कान्तया नर्तितो मे,
यामध्यास्ते दिवसविगमे नीलकण्ठः सुहृद्वः ॥५॥

---

१ वृति :—वृक्षक्षेत्रादिरक्षणार्थं तदभितो विहिता प्रायः कण्टकिक्षुपाणां वर्तुलाकृती रचना ।

२ शिञ्जावलयम् :—शिञ्जायुक्तम् वलयम् (शिञ्जा—ललनाभिः धृतानां कंकणनूपुररशनाद्यलङ्काराणां मधुरो ध्वनिः )

एभिः साधो हृदयनिहितैर्लक्षणैर्लक्षयेथा,
द्वारोपान्ते लिखितवपुषौ शङ्खपद्मौ च दृष्ट्वा
क्षामच्छायं भवनमधुना मद्वियोगेन नूनम्,
सूर्यापाये न खलु कमलं पुष्यति स्वामभिख्याम् ॥६॥

**प्रश्नाः—** (१) यक्षगृहपरिसरं सुरभाषया वर्णयत । (२) अत्र परिच्छेदे के के कविसमयाः ? (३) नीलकण्ठो मेघस्य सुहृद् कथम् ?

---

# ३ क्षात्रतेजास्विनी द्रौपदी

**परिचयः—** गभीरार्थप्रतिपादकानां महाकाव्यानां निर्मातृषु भारविर्नाम भारतवर्षे सुप्रसिद्धः कविः। काव्येषु कानिचित् द्राक्षापाकतुल्यानि, अपराणि च नारिकेलपाकतुल्यानि । तदुक्तम्—

'द्राक्षापाकः स कथितो बहिरन्तस्फुरद्रसः ।
स नारिकेलपाकः स्यात् अन्तर्गूढरसोदयः' ॥ इति ॥

अर्थतः शब्दतश्च सुगमानां येषां काव्यविशेषाणां वाचनमात्रेणैव रसास्वादो भवति ते द्राक्षापाकाः। शब्दतोऽर्थतश्च दुर्गमाणां येषां रसास्वादः केवलं वाचनेन न भवति, किन्तु शब्दार्थविज्ञाने विशेषप्रयासमपेक्षते ते नारिकेलपाकाः। भारविकविकृतं किरातार्जुनीयकाव्यं तु द्वितीयकोटचामन्तर्भवति। अयं च भारविः क्रिस्ताब्दस्य षष्ठे शतके सम्बभूवेति वदन्तीतिहासकाराः। एतस्य जन्मदेशस्तु नाद्यापि निर्धारितः। एतेन रचितस्य महाकाव्यस्य किरातार्जुनीयमिति नाम कथावृत्तदर्शकं वर्तते। अर्जुन इन्द्रकीलपर्वते उग्रेण तपसा महेश्वरं प्रसाद्य किरातरूपधारिणस्तस्मात् पाशुपतं नाम दिव्यास्त्रं लेभे इति महाभारतीया कथास्य काव्यस्य विषयः।

तत्र च प्रथमसर्गात् उद्धृतोऽयं पद्यसमुदायः। अत्र च द्वैतवनस्थितेन युधिष्ठिरेण प्रणिधिरूपेण प्रहितो वनेचरो दुर्योधनवृत्तं निभृतं विज्ञाय प्रत्यागतो युधिष्ठिराय तद्वार्तां कथयति। तत्र '**स किंसखा साधु न शास्ति योऽधिपम्, हितं मनोहारि च दुर्लभं वचः, अहो दुरन्ता बलवद्विरोधिता,**' इत्यादिना सम्यक्ग्रथितानि व्यावहारिकाणि तत्त्वानि वाचकानां हृदयमावर्जयन्ति। दुर्योधस्योत्कर्षं दूतमुखात् विज्ञाय प्रक्षुब्धमानसा द्रौपदी युधिष्ठिरादीन् युद्धोद्यमे प्रवर्तयितुं यद् भाषते; तद्भाषणमभिजातक्षत्रकुलोत्पन्नानां पुरातनीनां भारतीयनारीणां राजनीत्यभिज्ञत्वं परपरिभवासहत्वं च सूचयति।

**श्रियः कुरूणामधिपस्य पालनीं प्रजासु वृत्तिं यमयुङ्क्त वेदितुम्।**
**स [1]वर्णिलिङ्गी विदितः समाययौ युधिष्ठिरं द्वैतवने वनेचरः॥१॥**
**कृतप्रणामस्य महीं महीभुजे जितां सपत्नेन निवेदयिष्यतः।**
**न विव्यथे तस्य मनो, न हि प्रियं प्रवक्तुमिच्छन्ति मृषा हितैषिणः॥२॥**
**द्विषां विघाताय [2]विधातुमिच्छतो रहस्यनुज्ञामधिगम्य भूभृतः।**
**स [3]सौष्ठवौदार्यविशेषशालिनीं विनिश्चितार्थामिति[4] वाचमाददे[5]॥३॥**
**क्रियासु युक्तैर्नृप चारचक्षुषो न वञ्चनीयाः प्रभवोऽनुजीविभिः।**
**अतोऽर्हसि क्षन्तुमसाधु साधु वा हितं मनोहारि च दुर्लभं वचः॥४॥**
**स किंसखा[6] साधु न शास्ति योऽधिपं [7]हितान्न यः संशृणुते स किंप्रभुः[8]।**
**सदानुकूलेषु हि कुर्वते [9]रतिं नृपेष्वमात्येषु च सर्वसम्पदः॥५॥**
**निसर्गदुर्बोधमबोधविक्लवाः[10] क्व भूपतीनां चरितं क्व जन्तवः।**
**तवा[11]नुभावोऽयमवेदि यन्मया निगूढतत्त्वं नयवर्त्म विद्विषाम्॥६॥**

---

१ ब्रह्मचारिचिह्नवान्, २ उद्यमं कर्तुम्, ३ शब्दसामर्थ्यम्, ४ इति—वक्ष्यमाणरूपाम्, ५ उवाच इत्यर्थः, ६ कुत्सितः सखा, ७ हितोपदेशकादाप्तजनात्, ८ कुत्सितः स्वामी, ९ अनुरागम् चिरमवस्थानमित्यर्थः, १० अज्ञानोपहताः, ११ प्रभावः सामर्थ्यम्.

विशङ्कमानो [1]भवतः पराभवं नृपासनस्थोऽपि वनाधिवासिनः ।
[2]दुरोदरच्छद्म[3]जितां समीहते नयेन जेतुं जगतीं सुयोधनः ॥७॥
तथापि जिह्मः[4] स भवज्जिगीषया तनोति शुभ्रं गुणसम्पदा यशः ।
समुन्नयन् भूतिमनार्यसङ्गमात् वरं विरोधोऽपि समं महात्मभिः ॥८॥
सखीनिव प्रीतियुजोऽनुजीविनः समानमानान् सुहृदश्च बन्धुभिः ।
स सन्ततं दर्शयते गतस्मयः[5] कृताधिपत्यामिव साधु बन्धुताम्[6] ।९।
असक्तमाराधयतो यथायथं विभज्य भक्त्या समपक्षपातया ।
गुणानुरागादिव सख्यमीयिवान् न बाधतेऽस्य त्रिगणः[7] परस्परम् ।१०
वसूनि वाञ्छन् न वशी न मन्युना स्वधर्म इत्येव निवृत्तकारणः ।
गुरूपदिष्टेन रिपौ सुतेऽपि वा निहन्ति दण्डेन स धर्मविप्लवम् ।११।
महौजसो मानधना धनार्चिता धनुर्भृतः [8]संयति लब्धकीर्तयः ।
नसंहतास्तस्य [10]नभिन्नवृत्तयः प्रियाणि वाञ्छन्त्यसुभिः समीहितुम् १२
महीभृतां सच्चरितैश्चरैः क्रियाः स वेद निःशेषमशेषितक्रियः ।
महोदयैस्तस्य हितानुबन्धिभिः प्रतीयते धातुरिवेहितं फलैः ॥१३॥
न तेन सज्यं क्वचिदुद्यतं धनुः कृतं न वा कोपविजिह्ममाननम् ।
गुणानुरागेण शिरोभिरुह्यते नराधिपैर्माल्यमिवास्य शासनम् ॥१४॥
स यौवराज्ये नवयौवनोद्धतं निधाय दुःशासनमिद्धशासनः[11] ।
मखेष्वखिन्नोऽनुमतः पुरोधसा धिनोति हव्येन हिरण्यरेतसम्[12] ।१५।
प्रलीनभूपालमपि [13]स्थिरायति प्रशासदावारिधि मण्डलं भुवः ।
स चिन्तयत्येव भियस्त्वदेष्यतीरहो दुरन्ता बलवद्विरोधिता ॥१६॥

---

१ भवत्सकाशात्, २ द्यूतम्, ३ कपटम्, ४ वक्रः वञ्चकः, ५ निरहंकारः, ६ बन्धूनां समूहम्, ७ धर्मार्थकामाः, ८ युद्धे, ९ स्वार्थेन मिथः न संगताः, १० स्वामिकार्यार्थमविरोधिनः ११ इद्धं– प्रदीप्तम् - अप्रतिहतमित्यर्थः, १२ अग्निम्, १३ **आयतिः** उत्तरकालः उत्कर्षकालः इत्यर्थः.

तदाशु कर्तुं त्वयि जिह्ममुद्यते विधीयतां तत्र विधेयमुत्तरम् ।
परप्रणीतानि वचांसि चिन्वतां [1]प्रवृत्तिसाराः खलु मादृशां गिरः ।१७।
इतीरयित्वा गिरमात्तसत्क्रिये गतेऽथ पत्यौ वनसंनिवासिनाम् ।
प्रविश्य कृष्णासदनं महीभुजा तदाचचक्षेऽनुजसन्निधौ वचः ॥१८॥
निशम्य सिद्धिं द्विषतामपाकृतीः[2] ततस्ततस्त्या[3] विनियन्तुमक्षमा ।
नृपस्य मन्युव्यवसायदीपिनीः उदाजहार द्रुपदात्मजा गिरः ॥१९॥
भवादृशेषु प्रमदाजनोदितं भवत्यधिक्षेप[4] इवानुशासनम् ।
तथापि वक्तुं [5]व्यवसाययन्ति मां निरस्तनारीसमया[6] दुराधयः[7] ।२०।
अखण्डमाखण्डलतुल्यधामभिः चिरं धृता भूपतिभिः स्ववंशजैः ।
त्वयात्महस्तेन मही मदच्युता मतङ्गजेन स्रगिवापवर्जिता ॥२१॥
व्रजन्ति ते मूढधियः पराभवं भवन्ति मायाविषु ये न मायिनः ।
प्रविश्य हि घ्नन्ति शठास्तथाविधान् असंवृताङ्गान्निशिता[8] इवेषवः २२
भवन्तमेतर्हि[9] मनस्विगर्हिते विवर्तमानं नरदेव वर्त्मनि ।
कथं न मन्युर्ज्वलयत्युदीरितः शमीतरुं शुष्कमिवाग्निरुच्छिखः ॥२३॥
अवन्ध्यकोपस्य विहन्तुरापदां भवन्ति वश्याः स्वयमेव देहिनः ।
अमर्षशून्येन जनस्य जन्तुना न जातहार्देन[10] न विद्विषादरः ॥२४॥
परिभ्रमँल्लोहितचन्दनोचितः पदातिरन्तर्गिरि रेणुरूषितः[11] ।
महारथः सत्यधनस्य मानसं दुनोति नो कच्चिदयं वृकोदरः[12] ।२५।
विजित्य यः [13]प्राज्यमयच्छदुत्तरान् कुरूनकुप्यं[14] वसु वासवोपमः ।
स वल्कवासांसि तवाधुनाहरन् करोति मन्युं न कथं धनञ्जयः ।२६।

---

१ **प्रवृत्तिः** वार्ता, २ विकारान्, ३ ततः द्विषद्भ्यः आगताः, ४ निन्दा, ५ प्रेरयन्ति, ६ शालीनतादयः स्त्रीणामाचाराः, ७ दुष्टाः मनोव्यथाः 'पुंस्याधिर्मानसी व्यथा' इत्यमरः, ८ तीक्ष्णाः, ९ इदानीम्, १० **हार्दम्** प्रेम, ११ धूलिव्याप्तः, १२ भीमः, १३ प्रभूतम्, १४ हेमरूप्यात्मकम्.

वनान्तशय्याकठिनीकृताकृती कचाचितौ विष्वगिवागजौ गजौ ।
कथं त्वमेतौ धृतिसंयमौ यमौ विलोकयन्नुत्सहसे न बाधितुम् ॥२७॥
इमामहं वेद न तावकीं धियं विचित्ररूपाः खलु चित्तवृत्तयः ।
विचिन्तयन्त्या भवदापदं परां रुजन्ति चेतः प्रसभं ममाधयः ॥२८॥
पुराधिरूढः शयनं महाधनं विबोध्यसे यः स्तुतिगीतिमङ्गलैः ।
[1]अदभ्रदर्भामधिशय्य स स्थलीं जहासि निद्रामशिवैः शिवारुतैः ।२९।
अनारतं यौ मणिपीठशायिनौ अरञ्जयद्राजशिरःस्रजां रजः ।
निषीदतस्तौ चरणौ वनेषु ते मृगद्विजालूनशिखेषु [2]बर्हिषाम् ॥३०॥
द्विषन्निमित्ता यदियं दशा ततः समूलमुन्मूलयतीव मे मनः ।
[3]परैरपर्यासितवीर्यसम्पदां पराभवोऽप्युत्सव एव मानिनाम् ॥३१॥
विहाय शान्तिं नृप धाम तत्पुनः प्रसीद सन्धेहि वधाय विद्विषाम् ।
व्रजन्ति शत्रूनवधूय निःस्पृहाः शमेन सिद्धिं मुनयो न भूभृतः ॥३२॥
अथ क्षमामेव निरस्तविक्रमश्चिराय [4]पर्येषि सुखस्य साधनम् ।
विहाय [5]लक्ष्मीपतिलक्ष्म कार्मुकं जटाधरः सञ्जुहुधीह पावकम् ।३३।
न [6]समयपरिरक्षणं क्षमं ते [7]निकृतिपरेषु परेषु भूरिधाम्नः ।
अरिषु हि विजयार्थिनः क्षितीशा विधदति [8]सोपधि [9]सन्धिदूषणानि ३४

विधिसमयनियोगाद्दीप्तिसंहारजिह्मं
शिथिल[10]वसुमगाधे मग्नमापत्पयोधौ ।
रिपुतिमिरमुदस्योदीयमानं दिनादौ
दिनकृतमिव लक्ष्मीस्त्वां समभ्येतु भूयः ॥३५॥

---

१ अदभ्रं बहुलं बहु इत्यमरः २ कुशानाम्, ३ **अपर्यासिता**– अपराजिता, ४ मन्यसे, ५ राजचिह्नम्, ६ **समयः**– त्रयोदशसंवत्सरान् वने वत्स्यामि एवंरूपा प्रतिज्ञा, ७ **निकृतिः**– कपटम्, ८ सकपटम्, ९ प्रतिज्ञाविघटनानि, १० **वसु**– धनम् किरणः च ।

**प्रश्नाः–** (१) शत्रोः दुर्योधनस्योत्कर्षवृत्तं कथयतः वनेचरस्य मनः कुतः उद्विग्नं नाभूत् (२) दुर्योधनः अग्निसाध्यानि यज्ञकर्माणि कुतः करोति स्म ? (३) दुर्योधनस्य राज्यशासनपद्धतिं स्ववाक्यैः कथयत। (४) 'प्रतीयते धातुरिवेहितं फलैः' इति वाक्यं दुर्योधनविषये घटयत। 'फलानुमेयाः प्रारम्भाः' इति कालिदासवचनेनास्य वचनस्य सादृश्यं विमृशत। (५) द्रौपदीभाषणे दर्शितायाः भीमार्जुनादीनां पूर्वावस्थायाः तत्कालीनावस्थायाश्च कीदृशो भेदः ? (६) पत्न्या द्रौपद्या कृतः पत्युर्धर्मराजस्याधिक्षेपः कथं संगच्छते ? (७) 'पराभवोऽप्युत्सव एव मानिनाम्, शमेन सिद्धिं मुनयो व्रजन्ति, जटाधरः सञ्जुहुधीह पावकम्' एतैर्वाक्यैर्द्रौपद्या मनःस्थितिः कीदृशी उन्नीयते ? ॥

---

# ४ प्रदीप्तकोपं भीमं धर्मराजः सान्त्वयति

**परिचय :–** तृतीयपाठवत् किरातार्जुनीयस्य द्वितीयसर्गादुद्धृतोऽयं प्रसङ्गः। अस्मिन् प्रसङ्गे उपक्रमे भीमेन द्रौपदीमतपरिपोषः '**अपि वागधिपस्य दुर्वचं वचनं तद्विदधीत विस्मयम्**' इति प्रशंसापूर्वकं कृतः। तदीयभाषणे **मानिनः सुखमुज्झन्ति न धाम, त्वदनुत्साहहता विपत्तयो विद्विषाम्**' इत्यादीनि अमर्षसूचकानि वाक्यानि युधिष्ठिरस्य मन्यूद्दीपकानि सन्ति। तानि श्रुत्वापि अजातशत्रुः शान्तचेता युधिष्ठिरो भीमस्य विकारपरवशतामपनोदितुं '**सहसा विदधीत न क्रियामविवेकः परमापदां पदम्, असुरक्ष्या हि बहुच्छलाः श्रियः**' इत्यादिभिर्वाक्यैः सहिष्णुतामेवोपदिशति। सोऽयं सन्दर्भो भारतीयराजनीतेः सुदूरदर्शितां जनानुरागमूलतां च प्रकटयन् महाकविना भारविणा गभीरैः शब्दार्थैः प्रदर्शितः। अत एव वदन्ति अभियुक्ताः– '**भारवेरर्थगौरवम्**' इति।

विहितां[1] प्रियया मनःप्रियामथ निश्चित्य गिरं गरीयसीम् ।
[2]उपपत्तिमदूर्जिताश्रयं[3] नृपमूचे वचनं वृकोदरः ॥१॥
यदवोचत वीक्ष्य मानिनी परितः स्नेहमयेन चक्षुषा ।
अपि [4]वागधिपस्य दुर्वचं वचनं तद्विदधीत[5] विस्मयम् ॥२॥
विषमोऽपि विगाह्यते [6]नयः कृततीर्थः[7] पयसामिवाशयः ।
स तु तत्र विशेषदुर्लभः सदुपन्यस्यति कृत्यवर्त्म यः ॥३॥
इयमिष्टगुणाय रोचतां रुचिरार्था भवतेऽपि भारती ।
ननु वक्तृविशेषनिःस्पृहा [8]गुणगृह्या वचने विपश्चितः ॥४॥
[9]चतसृष्वपि ते विवेकिनी नृप विद्यासु निरूढिमागता ।
कथमेत्य मतिर्विपर्ययं करिणी पङ्कमिवावसीदति ॥५॥
विधुरं किमतः परं परैरवगीतां [10]गमिते दशामिमाम् ।
अवसीदति यत्सुरैरपि त्वयि सम्भावितवृत्ति पौरुषम् ॥६॥
द्विषतामुदयः सुमेधसा गुरुरस्वन्ततरः[11] सुमर्षणः ।
न महानपि भूतिमिच्छता फलसम्पत्प्रवणः परिक्षयः ॥७॥
क्षययुक्तमपि स्वभावजं दधतं धाम शिवं समृद्धये ।
प्रणमन्त्यनपाय[12]मुत्थितं प्रतिपच्चन्द्रमिव प्रजा नृपम् ॥८॥
अभिमानवतो मनस्विनः प्रियमुच्चैः पदमारुरुक्षतः ।
[13]विनिपातनिवर्तनक्षमं मतमालम्बनमात्मपौरुषम् ॥९॥
विपदोऽभिभवन्त्यविक्रमं [14]रहयत्यापदुपेतमायतिः ।
नियता[15] लघुता [16]निरायतेरगरीयान्न पदं नृपश्रियः ॥१०॥

---

१ उक्तां, २ युक्तियुक्तम्, ३ उदारार्थम्, ४ बृहस्पतेः, ५ कुर्यात्, ६ नीतिशास्त्रम्, ७ **तीर्थं**– जलावतारः ८ गुणग्राहिणः, ९ आन्वीक्षिकी त्रयी वार्ता दण्डनीतिश्च शाश्वती । विद्याश्चैताश्चतस्रस्तु लोकसंस्थिति-हेतवः । इति कामन्दकः, १० प्रापिते, ११ अतिदुरन्तः, १२ शिवम्, **१३ विनिपातः**–अनर्थः, १४ त्यजति, १५ अवश्यंभाविनी, १६ आसन्नक्षयस्य,

तदलं प्रतिपक्षमुन्नतेरवलम्ब्य [1]व्यवसायवन्ध्यताम् ।
निवसन्ति पराक्रमाश्रया न विषादेन समं समृद्धयः ॥११॥
अथ चेदवधिः प्रतीक्ष्यते कथमाविष्कृतजिह्मवृत्तिना ।
धृतराष्ट्रसुतेन सुत्यजाः चिरमास्वाद्य नरेन्द्रसम्पदः ॥१२॥
द्विषता [2]विहितं त्वयाथवा यदि लब्धा पुनरात्मनः पदम् ।
जननाथ तवानुजन्मनां कृतमाविष्कृतपौरुषैर्भुजैः ॥१३॥
मदसिक्तमुखैर्मृगाधिपः करिभिर्वर्तयते[3] स्वयं हतैः ।
[4]लघयन् खलु तेजसा जगन्न महानिच्छति [5]भूतिमन्यतः ॥१४॥
अभिमानधनस्य [6]गत्वरैः असुभिः [7]स्थास्नु यशश्चिचीषतः[8] ।
[9]अचिरांशुविलासचञ्चला ननु लक्ष्मीः फलमानुषङ्गिकम् ॥१५॥
ज्वलितं न [10]हिरण्यरेतसं चयमास्कन्दति[11] भस्मनां जनः ।
[12]अभिभूतिभयादसूनतः सुखमुज्झन्ति न धाम मानिनः ॥१६॥
किमपेक्ष्य फलं पयोधरान् ध्वनतः प्रार्थयते[13] मृगाधिपः ।
प्रकृतिः खलु सा महीयसः सहते नान्यसमुन्नतिं यया ॥१७॥
कुरु तन्मतिमेव विक्रमे नृप निर्धूय तमः प्रमादजम् ।
ध्रुवमेतदवेहि विद्विषां त्वदनुत्साहहता विपत्तयः ॥१८॥
इति दर्शितविक्रियं सुतं मरुतः कोपपरीतमानसम् ।
उपसान्त्वयितुं महीपतिः द्विरदं दुष्टमिवोपचक्रमे ॥१९॥
[14]अपवर्जितविप्लवे शुचौ [15]हृदयग्राहिणि मङ्गलास्पदे ।
विमला तव विस्तरे गिरां मतिरादर्श इवाभिदृश्यते ॥२०॥

---

१ उद्योगशून्यताम्, २ प्रत्यर्पितम्, ३ जीवति, ४ लघूकुर्वन्, ५ वृद्धिम्, ६ गमनशीलैः, ७ स्थिरम्, ८ संग्रहीतुमिच्छतः, ९ **अचिरांशुः**— विद्युत्, १० अग्निम्, ११ आक्रामति, १२ पराजयभयात्, १३ अभियाति, १४ प्रमाणयुक्ते— मलरहिते च, १५ मनोरमे.

उपपत्तिरुदाहृता [1]बलादनुमानेन न [2]चागमः क्षतः ।
इदमीदृगनीदृगाशयः[3] प्रसभं वक्तुमुपक्रमेत कः ॥२१॥
अवितृप्ततया तथापि मे हृदयं निर्णयमेव धावति ।
[4]अवसाययितुं क्षमाः सुखं न [5]विधेयेषु [6]विशेषसम्पदः ॥२२॥
सहसा विदधीत न क्रियामविवेकः परमापदां पदम् ।
वृणते हि विमृश्यकारिणं[7] गुणलुब्धाः स्वयमेव सम्पदः ॥२३॥
शुचि भूषयति श्रुतं वपुः प्रशमस्तस्य भवत्यलङ्क्रिया ।
प्रशमाभरणं पराक्रमः स नयापादितसिद्धिभूषणः ॥२४॥
स्पृहणीयगुणैर्महात्मभिश्चरिते वर्त्मनि यच्छतां मनः ।
विधिहेतुरहेतुरागसां विनिपातोऽपि समः समुन्नतेः ॥२५॥
अपनेयमुदेतुमिच्छता तिमिरं रोषमयं धिया पुरः ।
अविभिद्य निशाकृतं तमः प्रभया नांशुमताप्युदीयते ॥२६॥
बलवानपि कोपजन्मनस्तमसो नाभिभवं रुणद्धि यः ।
क्षयपक्ष इवैन्दवीः कलाः सकला हन्ति स शक्तिसम्पदः ॥२७॥
समवृत्तिरुपैति मार्दवं समये यश्च तनोति तिग्मताम् ।
अधितिष्ठति लोकमोजसा स विवस्वानिव मेदिनीपतिः ॥२८॥
क्व चिराय परिग्रहः श्रियां क्व च दुष्टेन्द्रियवाजिवश्यता ।
शरदभ्रचलाश्चलेन्द्रियैरसुरक्ष्या हि [8]बहुच्छलाः श्रियः ॥२९॥
श्रुतमप्यधिगम्य ये रिपून् विनयन्ते न शरीरजन्मनः ।
जनयन्त्यचिराय सम्पदामयशस्ते खलु चापलाश्रयम् ॥३०॥
उपकारकमायतेर्भृशं प्रसवः कर्मफलस्य भूरिणः ।
अनपायि [9]निबर्हणं द्विषां न तितिक्षासममस्ति साधनम् ॥३१॥

---

१ बलमाश्रित्य, २ शास्त्रम्, ३ एतादृशाभिप्रायरहितः, ४ यथार्थरूपेण बोधयितुम्, ५ सन्धिविग्रहादिकार्येषु, ६ अवान्तरसूक्ष्मभेदाः, ७ विवेककर्तारम्, ८ बहुकपटाः, ९ विनाशकम.

मदमानसमुद्धतं नृपं न वियुङ्क्ते नियमेन मूढता ।
अतिमूढ उदस्यते नयान्नयहीनादपरज्यते जनः ॥३२॥
अपरागसमीरणेरितः क्रमशीर्णाकुलमूलसन्ततिः ।
सुकरस्तरुवत् सहिष्णुना रिपुरुन्मूलयितुं महानपि ॥३३॥
अणुरप्युपहन्ति विग्रहः प्रभुमन्तःप्रकृतिप्रकोपजः ।
अखिलं हि हिनस्ति भूधरं तरुशाखान्तनिघर्षजोऽनिलः ॥३४॥
मतिमान् विनयप्रमाथिनः समुपेक्षेत समुन्नतिं द्विषः ।
सुजयः खलु तादृगन्तरे विपदन्ता ह्यविनीतसम्पदः ॥३५॥

**प्रश्नाः–** ( १ ) स्पष्टीक्रियताम्–१ गुणगृह्या वचने विपश्चितः। २ न महानिच्छति भूतिमन्यतः। ३ विपदन्ता ह्यविनीतसंपदः ( २ ) पराक्रमहीनस्य भूपतेः अपकर्षः केन क्रमेण भवति? ( ३ ) तीक्ष्णत्वमार्दवयोः काले प्रयुक्तयोः फलं कीदृशम्? ( ४ ) शुचिनः श्रुतस्य राजनीतौ क उपयोगः? ( ५ ) मदमानसमुद्धतो नृपः कथं ह्रसति?

---

# ५ निगूढो मन्त्रविचारः

**परिचयः–** प्रौढपद्यकाव्यनिर्माणे भारवेरिव माघकवेरपि कौशलं प्रथितमेव। एतेन कविना शिशुपालवधाख्यं महाकाव्यं विरचितम्। अयं कविः क्रिस्ताब्दस्य सप्तमशतकपूर्वार्धे बभूवेति ज्ञायत इतिहासात्। जन्मदेशादिविषये तु सत्यपि विवादे गुर्जरदेशीयोऽयमित्यन्तरङ्गबहिरङ्गप्रमाणै-

निधारयितुं शक्यते । एतस्मिन् शिशुपालवधनामके महाकाव्ये प्राधान्येन प्रतिपाद्यमानः कथाभागो नाम्नैव सुज्ञेयः । द्वितीयसर्गात् समुद्धृत्य संकलितोऽयं भागः । अत्रत्यः कथासन्दर्भः– तत्र प्रथमसर्गे देवर्षिः नारदः शिशुपालेन कृतां लोकपीडां वर्णयति तद्वधस्य अवश्यकर्तव्यतां च समर्थयते किन्तु सांप्रतमेव युधिष्ठिरकृतामन्त्रणानुसारेण राजसूययज्ञार्थगमनं शिशुपालमभि युद्धयात्रागमनं चेति कार्यद्वयं श्रीकृष्णस्य कर्तव्यं समापतितं भवति । तयोर्मध्ये कस्य प्रथमकर्तव्यतेति निर्धारणाय उद्धवबलरामाभ्यां सह राजनैतिको मन्त्रविचारः प्रवर्तते ।

तत्र श्रीकृष्णेन विषयोपन्यासे कृते प्रहारप्रियो धीरोद्धतस्वभावो बलरामः स्वयं युद्धयात्रोपक्रमस्य कर्तव्यतामेव युक्तिभिः साधयति । ततः विमर्शशीलः उद्धवः स्वमभिप्रायमाविष्करोति, यत् ' व्यवहार इव राजनीतावपि सर्वत्र विमर्शकारिता एव यशस्करी सुखोदर्का च भवति । अधर्मशीलः शत्रुः प्रतिश्रुतान् समयान् नानुतिष्ठेत् सर्वदा च कलहायेत नाम, नैतावता विजिगीषुः स्वधर्मं समयान् वा अतिक्रामेत् । न वा अविचारेण सर्वथा लोकानामुद्वेगकरं भीषणं युद्धं स्वयमुपक्रामितुमुत्सहेत । शत्रुणा स्वयमुद्भावितं युद्धं तु अवश्यं प्रतिकुर्यात् । तेनैव सः न केवलं सुहृदामेव किन्तु उदासीनानां शत्रूणामपि सहकारितां विन्देत । लोकानां स्थिरायतिकं सन्तोषं कर्तुं च कल्पेत । अतः स्वयं युद्धोद्यमं परित्यज्य यज्ञे सुहृत्साहाय्यमेवास्माभिर्विधेयम्' इति । अस्मिन् सन्दर्भे **' उत्तिष्ठमानस्तु परो नोपेक्ष्यो भूतिमिच्छता, ज्ञातसारोऽपि खल्वेकः सन्दिग्धे कार्यवस्तुनि, महीयांसः प्रकृत्या मितभाषिणः, क्रिया केवलमुत्तरम्, स्वस्थादेवापमानेऽपि देहिनस्तद्वरं रजः, चतुर्थोपायसाध्ये तु रिपौ सान्त्वमपक्रिया, महारम्भाः कृतधियस्तिष्ठन्ति च निराकुलाः, अयथाबलमारम्भः निदानं क्षयसम्पदः, बृहत्सहायः कार्यान्तं क्षोदीयानपि गच्छति, वागेका वाग्मिनः सतः, छन्दानुवृत्तिदुःसाध्याः सुहृदो विमनीकृताः '।** इत्यादीनि अणीयांस्यपि वचनानि व्यवहारोपयोगीनि राजनैतिकानि च तत्त्वानि मार्मिकतयोपदिशन्ति ।

अस्य काव्यस्य प्रशस्तिविषये 'माघे सन्ति त्रयो गुणाः' (उपमा अर्थगौरवं, पदलालित्यं च) इति प्रसिद्ध आभाणकः प्रतिश्लोकमनुभवपथमवतरति ।

[1]यियक्षमाणेनाहूतः पार्थेनाथ द्विषन् मुरम् ।
अभिचैद्यं प्रतिष्ठासुः आसीत् कार्यद्वयाकुलः ॥१॥
सार्धमुद्धवसीरिभ्याम् अथासावासदत्सदः ।
गुरुकाव्यानुगां बिभ्रत् चान्द्रीमभिनभः श्रियम् ॥२॥
रत्नस्तम्भेषु संक्रान्तप्रतिमास्ते चकाशिरे ।
एकाकिनोऽपि परितः [2]पौरुषेयवृता इव ॥३॥
गुरुद्वयाय गुरुणोः उभयोरथ कार्ययोः ।
हरिर्विप्रतिषेधं तम् आचचक्षे विचक्षणः ॥४॥
भवद्गिरामवसरप्रदानाय वचांसि नः ।
पूर्वरङ्गः प्रसङ्गाय नाटकीयस्य वस्तुनः ॥५॥
करदीकृतभूपालो भ्रातृभिर्जित्वरैर्दिशाम् ।
विनाप्यस्मदलंभूष्णुः[3] [4]इज्यायै तपसः सुतः ॥६॥
उत्तिष्ठमानस्तु परो नोपेक्ष्यो भूतिमिच्छता ।
समौ हि शिष्टैराम्नातौ वर्त्स्यन्तावामयः स च ॥७॥
न दूये [5]सात्वतीसूनुः यन्मह्यमपराध्यति ।
यत्तु [6]दन्दह्यते लोकम् अदो [7]दुःखाकरोति माम् ॥८॥
मम तावन्मतमिदं श्रूयतामङ्ग वामपि ।
ज्ञातसारोऽपि खल्वेकः [8]सन्दिग्धे कार्यवस्तुनि ॥९॥

---

१ यज्ञं कर्तुमिच्छता, २ पुरुषसमूहः, ३ समर्थः, ४ यागाय, ५ **सात्वती**–श्रीकृष्णस्य पितृष्वसा, ६ गर्हितं पीडयति, ७ दुःखं करोति, ८ संशेते.

यावदर्थपदां वाचम् एवमादाय माधवः ।
विरराम महीयांसः प्रकृत्या मितभाषिणः ॥१०॥

**ततो बलरामः—**

जगाद वदनच्छद्मपद्मपर्यन्तपातिनः ।
नयन्मधुलिहः श्वैत्यम् उदग्रदशनांशुभिः ॥११॥
यद्वासुदेवेनादीनम् [1]अनादीनवमीरितम् ।
वचसस्तस्य सपदि क्रिया केवलमुत्तरम् ॥१२॥
संक्षिप्तस्याप्यतोऽस्यैव वाक्यस्यार्थगरीयसः ।
सुविस्तरतरा वाचो भाष्यभूता भवन्तु मे ॥१३॥
विरोधिवचसो मूकान् वागीशानपि कुर्वते ।
जडानप्यनुलोमार्थान्[2] प्रवाचः कृतिनां गिरः ॥१४॥
तृप्तियोगः परेणापि महिम्ना न महात्मनाम् ।
पूर्णश्चन्द्रोदयाकाङ्क्षी दृष्टान्तोऽत्र महार्णवः ॥१५॥
सम्पदा सुस्थिरंमन्यो भवति स्वल्पयापि यः ।
कृतकृत्यो विधिर्मन्ये न वर्धयति तस्य ताम् ॥१६॥
[3]समूलघातमघ्नन्तः परान्नोद्यन्ति मानिनः ।
प्रध्वंसितान्धतमसः तत्रोदाहरणं रविः ॥१७॥
विपक्षमखिलीकृत्य[4] प्रतिष्ठा खलु दुर्लभा ।
अनीत्वा पङ्कतां धूलिम् उदकं नावतिष्ठते ॥१८॥
ध्रियते यावदेकोऽपि रिपुस्तावत्कुतः सुखम् ।
पुरः क्लिश्नाति सोमं हि [5]सैंहिकेयोऽसुरद्रुहाम् ॥१९॥
सखा गरीयान् शत्रुश्च कृत्रिमस्तौ हि कार्यतः ।
स्याताममित्रौ मित्रे च सहजप्राकृतावपि ॥२०॥

---

१ निर्दोषम्, दोष आदीनवो मतः इत्यमरः, २ अनुकूलवादिनः, ३ समूलं हत्वा, ४ उत्सन्नमकृत्वा, ५ राहुः.

उपकर्त्रारिणा सन्धिः न मित्रेणापकारिणा ।
उपकारापकारौ हि लक्ष्यं लक्षणमेतयोः ॥२१॥
विधाय वैरं सामर्षे नरोऽरौ य उदासते ।
प्रक्षिप्योदर्चिषं[1] कक्षे शेरते तेऽभिमारुतम् ॥२२॥
[2]माजीवन्यः परावज्ञादुःखदग्धोऽपि जीवति ।
तस्याजननिरेवास्तु जननीक्लेशकारिणः ॥२३॥
पादाहतं यदुत्थाय मूर्धानमधिरोहति ।
स्वस्थादेवापमानेऽपि देहिनस्तद्वरं रजः ॥२४॥
तुङ्गत्वमितरा[3] नाद्रौ नेदं सिन्धावगाधता ।
अलङ्घनीयताहेतुः उभयं तन्मनस्विनि ॥२५॥
तुल्येऽपराधे स्वर्भानुः भानुमन्तं चिरेण यत् ।
हिमांशुमाशु ग्रसते तन्म्रदिम्नः स्फुटं फलम् ॥२६॥
स्वयं प्रणमतेऽल्पेऽपि परवायावुपेयुषि ।
निदर्शनमसाराणां लघुर्बहुतृणं[4] नरः ॥ २७ ॥
तेजस्विमध्ये तेजस्वी दवीयानपि गण्यते ।
पञ्चमः पञ्चतपसः[5] तपनो जातवेदसाम्[6] ॥२८॥
अकृत्वा हेलया पादम् उच्चैर्मूर्धसु विद्विषाम् ।
कथङ्कारमनालम्बा कीर्तिर्द्यामधिरोहति ॥२९॥
अङ्काधिरोपितमृगः चन्द्रमा मृगलाञ्छनः ।
केसरी निष्ठुरक्षिप्तमृगयूथो मृगाधिपः ॥३०॥

---

१ उद्धतज्वालमग्निम्, २ कुत्सितं जीवन्, ३ अन्या अगाधता इत्यर्थः, ४ तृणतुल्यः, ५ पञ्चाग्निसाधनं नाम व्रतमनुतिष्ठतः, ६ अग्नीनाम्.

[1]चतुर्थोपायसाध्ये तु रिपौ सान्त्वमपक्रिया ।
स्वेद्यमामज्वरं प्राज्ञः कोऽम्भसा परिषिञ्चति ? ॥३१॥
अन्यदुच्छृङ्खलं सत्त्वम् अन्यच्छास्त्रनियन्त्रितम् ।
[2]सामानाधिकरण्यं हि तेजस्तिमिरयोः कुतः ? ॥३२॥
इन्द्रप्रस्थगमस्तावत् कारि मा सन्तु चेदयः
आस्माकदन्तिसान्निध्यात् वामनीभूतभूरुहः ॥३३॥
यजतां पाण्डवः स्वर्गम् अवत्विन्द्रस्तपत्विनः[3] ।
वयं हनाम द्विषतः सर्वः स्वार्थं समीहते ॥३४॥
इति संरम्भिणो वाणीः बलस्यालेख्यदेवताः ।
सभाभित्तिप्रतिध्वानैः भयादन्ववदन्निव ॥३५॥
निशम्य ताः [4]शषगवीः अभिधातुमधोक्षजः ।
शिष्याय [5]बृहतां पत्युः [6]प्रस्तावमदिशत् दृशा ॥३६॥
भारतीमाहितभरामथानुद्धतमुद्धवः ।
तथ्यामुतथ्यानुजवत्[7] जगादाग्रे गदाग्रजम् ॥३७॥
संप्रत्यसांप्रतं वक्तुम् उक्ते मुसलपाणिना ।
निर्धारितेऽर्थे लेखेन [8]खलूक्त्वा खलु वाचिकम् ॥३८॥
तथापि यन्मय्यपि ते गुरुरित्यस्ति गौरवम् ।
तत्प्रयोजककर्तृत्वम् उपैति मम जल्पतः ॥३९॥
प्रज्ञोत्साहावतः स्वामी यतेताधातुमात्मनि ।
तौ हि मूलमुदेष्यन्त्या जिगीषोरात्मसंपदः ॥४०॥
आरभन्तेऽल्पमेवाज्ञाः कामं व्यग्रा भवन्ति च ।
महारम्भाः कृतधियः तिष्ठन्ति च निराकुलाः ॥४१॥

---

१ दण्डः, २ एकस्मिन्नाधारे स्थितिः, ३ सूर्यः, ४ शेषावतारस्य बलरामस्य वाचः, ५ बृहस्पतेः शिष्याय उद्धवाय, ६ अवसरम्, ७ बृहस्पतिवत्, ८ मा, 'निषेधवाक्यालंकारजिज्ञासानुनये खलु' इत्यमरः.

तजः क्षमा वा नैकान्तं कालज्ञस्य महीपतेः ।
नैकमोजः[1] प्रसादो वा रसभावविदः कवेः ॥४२॥
कृतापचारोऽपि परैः अनाविष्कृतपौरुषः ।
असाध्यः कुरुते कोपं प्राप्ते काले गदो यथा ॥४३॥
मृदुव्यवहितं तेजो भोक्तुमर्थान् प्रकल्पते ।
प्रदीपः स्नेहमादत्ते दशयाभ्यन्तरस्थया ॥४४॥
नालम्बते दैष्टिकतां[2] न निषीदति पौरुषे ।
शब्दार्थौ सत्कविरिव द्वयं विद्वान् अपेक्षते ॥४५॥
स्थाने शमवतां शक्त्या व्यायामे वृद्धिरङ्गिनाम् ।
अयथाबलमारम्भः निदानं क्षयसम्पदः ॥४६॥
तदीशितारं चेदीनां[3] भवांस्तमवमंस्त मा ।
निहन्त्यरीनेकपदे य उदात्तः[4] स्वरानिव ॥४७॥
मा वेदि यदसावेको जेतव्यश्चेदिराडिति ।
राजयक्ष्मेव रोगाणां समूहः स महीभृताम् ॥४८॥
तस्य मित्राण्यमित्रास्ते ये च ये चोभये नृपाः ।
अभियुक्तं त्वयैनं ते गन्तारस्त्वामतः परे ॥४९॥
बृहत्सहायः कार्यान्तं क्षोदीयानपि गच्छति ।
संभूयाम्भोधिमभ्येति महानद्या नगापगा ॥५०॥
मखविघ्नाय सकलमित्थमुत्थाप्य राजकम्[5] ।
हन्त जातमजातारेः प्रथमेन त्वयारिणा ॥५१॥

---

१ ओजः– प्रौढरचना, प्रसादः– सुकुमाररचना, काव्यगुणावेतौ, २ दैवमतिम्, ३ एतन्नामकदेशस्य, ४ एकस्मिन् पदे एकः उदात्तः अन्यान् स्वरान् निहन्ति– अनुदात्तान् करोति 'अनुदात्तं पदमेकवर्जम्' ६-१-१५८ इति पाणिनिसूत्रात्, ५ राजसमूहम्.

संभाव्य त्वामतिभरक्षमस्कन्धं स बान्धवः ।
सहायमध्वरधुरां धर्मराजो विवक्षते[1] ॥५२॥
महात्मानोऽनुगृह्णन्ति भजमानान् रिपूनपि ।
सपत्नीः प्रापयन्त्यब्धिं सिन्धवो नगनिम्नगाः ॥५३॥
चिरादपि बलात्कारो बलिनः सिद्ध्येऽरिषु ।
छन्दानुवृत्तिदुःसाध्याः सुहृदो विमनीकृताः[2] ॥५४॥
'सहिष्ये शतमागांसि सूनोस्त' इति यत्त्वया ।
प्रतीक्ष्यं तत्प्रतीक्ष्यायै[3] पितृष्वस्त्रे प्रतिश्रुतम् ॥५५॥
तीक्ष्णा नारुन्तुदा बुद्धिः कर्म शान्तं प्रतापवत् ।
नोपतापि मनः सोष्म वागेका वाग्मिनः सतः ॥५६॥
स्वयंकृतप्रसादस्य तस्याह्नो भानुमानिव ।
समयावधिमप्राप्य नान्तायालं भवानपि ॥५७॥
उपेयिवांसि कर्तारः पुरीमाजातशात्रवीम् ।
राजन्यकान्युपायज्ञैः एकार्थानि चरैस्तव ॥५८॥
सविशेषं सुते पाण्डोः भक्तिं भवति तन्वति ।
वैरायितारस्तरलाः स्वयं मत्सरिणः परे ॥५९॥
सहजचापलदोषसमुद्धतः चलितदुर्बलपक्षपरिग्रहः ।
तव दुरासदवीर्यविभावसौ[5] शलभतां लभतामसुहृद्गणः ॥६०॥

**प्रश्नाः**– (१) सभायां विवक्षितो विषयः श्रीकृष्णेन कथमुपक्षिप्तः ? (२) स्पष्टीकुरुत– " मे वाचो भाष्यभूता भवन्तु । सर्वः स्वार्थं समीहते । सामानाधिकरण्यं हि तेजस्तिमिरयोः कुतः " (३) शत्रुमित्रभावः स्थायी परिवर्तनशीलो वा ? (४) बलरामस्य मतेन किं युक्तियुक्तं प्राप्तकर्तव्यम् ?

---

१ वोढुमिच्छति, २ वैमनस्यं प्रापिताः, ३ पूज्यायै, ४ अजातशत्रोः धर्मराजस्य नगरीमिन्द्रप्रस्थम्, ५ दुःसहतेजोऽग्नौ.

# ६ युद्धोद्यतः शिशुपालः

**परिचयः—** शिशुपालवधस्य नाम महाकाव्यस्य कर्तुर्महाकवेर्माघस्य विषये यद्वक्तव्यं तत् पूर्वपाठे उक्तम् । तस्य पञ्चदशसर्गादुद्धृतोऽयं परिच्छेदः। सन्दर्भस्तु – राजसूयप्रसङ्गे धर्मराजकृतां श्रीकृष्णस्याग्रपूजामसहमानेन चेदिपतिना शिशुपालेन क्रमेण धर्मस्य, भीष्मस्य, भगवतः श्रीकृष्णस्य च निर्भर्त्सना कृता। उपस्थितानन्यानपि भूपान् दारुणैर्वचनैरवमत्य सभा-स्थानात् बहिर्निर्गत्य स्वशिबिरं च प्रविश्य युद्धदुर्मदो बभूव इति।

अस्मिन् सन्दर्भे युधिष्ठिरनिर्भर्त्सनायां धर्मराजसंज्ञायाः मगङलसंज्ञा-तुल्यता भीष्मनिर्भर्त्सनाकाले च '**स्फुटं भवसि निम्नगासुतः**' इति. श्रीकृष्णनिन्दाकाले च '**दण्डदलितसरघः मधुसूदनः** इत्यादयो वर्णना-प्रकारा अतीव प्रमोदावहा वर्तन्ते। एवं '**सुजनं जनाश्चलयितुं क ईशते**' इत्यादिभिरर्थान्तरन्यासैः कविर्माघः 'माघे सन्ति त्रयो गुणाः' इति स्वकीयां प्रख्यातिं सार्थकीकरोति ।

**अथ तत्र पाण्डुतनयेन सदसि विहितं मुरद्विषः ।**
**मानमहसत न चेदिपतिः परवृद्धिमत्सरि मनो हि मानिनाम् ।१।**
**पुर एव शार्ङ्गिणि सवैरम् अथ पुनरमुं तदर्चया ।**
**मन्युरभजदवगाढतरः [1]समदोषकाल इव देहिनं ज्वरः ॥२॥**
**ध्वनयन्सभामथ सनीरघनरवगभीरवागभीः[2] ।**
**वाचमवददतिरोषवशादतिनिष्ठुरस्फुटतरामसौ ॥३॥**

**धर्मं प्रति—**

**यदपूपुजस्त्वमिह पार्थ मुरजितमपूजितं सताम् ।**
**प्रेम विलसति महत्तदहो दयितं जनः खलु गुणीति मन्यते ॥४॥**

---

१ **दोषः—** अपथ्याचारः **कालः—** कर्मविपाकः २ निर्भयः.

यदराज्ञि राजवदिहार्घ्यम् उपहितमिदं मुरद्विषि ।
ग्राम्यमृग इव हविस्तदयं भजते ज्वलत्सु न महीशवह्निषु ॥५॥
[1]अनृतां गिरं न गदसीति जगति पटहैर्विघुष्यसे ।
निन्द्यमथ च हरिमर्चयतस्तव कर्मणैव विकसत्यसत्यता ॥६॥
तव धर्मराज इति नाम कथमिदमपष्ठु पठ्यते ।
भौमदिनमभिदधत्यथवा भृशमप्रशस्तमपि मङ्गलं जनाः ॥७॥
यदि वार्चनीयतम एष किमपि भवतां पृथासुताः ।
[2]शौरिरवनिपतिभिर्निखिलैरवमाननार्थमिह किं निमन्त्रितैः ॥८॥
अथ वा न धर्ममसुबोधसमयमवयात[3] बालिशाः ।
काममयमिहवृथापलितो हतबुद्धिरप्रणिहितः सरित्सुतः ॥९॥

भीष्मं प्रति—

स्वयमेव शन्तनुतनूज यमपि गणमर्घ्यमभ्यधाः[4] ।
तत्र मुररिपुरयं कतमो यमनिन्द्यबन्दिवदभिष्टुषे वृथा ॥१०॥
अवनीभृतां त्वमपहाय गणमतिजडः समुन्नतम् ।
[5]नीचि नियतमिह यच्चपलो निरतः स्फुटं भवसि निम्नगासुतः ११

कृष्णं प्रति—

[6]प्रतिपत्तुमङ्ग घटते च न तव नृपयोग्यमर्हणम् ।
कृष्ण कलय[7] ननु कोऽहमिति स्फुटमापदां पदमनात्मवेदिता[8] ।१२।
असुरस्त्वया न्यवधि कोऽपि मधुरिति कथं प्रतीयते ।
दण्डदलितसरघः[9] प्रथसे[10] मधुसूदनस्त्वमिति सूदयन्मधु ॥१३॥

---

१ असत्याम्, २ कृष्णः, ३ जानीत, ४ चतुर्दशेसर्गे 'स्नातकं गुरुम्' इति ५५ श्लोके ५ न्यङ्—नीचाचारः, ६ स्वीकर्तुम्, ७ जानीहि, ८ आत्मसामर्थ्याज्ञानम्, ९ सरघा— मधुमक्षिका, १० प्रसिद्धो भवसि.

मुचुकुन्दतल्पशरणस्य मगधपति[1]शातितौजसः ।
सिद्धमबल सबलत्वमहो तव [2]रोहिणीतनयसाहचर्यतः ॥१४॥
जगति श्रिया विरहितोऽपि यदुदधिसुतामुपायथाः ।
ज्ञातिजनजनितनामपदां त्वमतः श्रियः पतिरिति [3]प्रथामगाः ।१५।
त्वयि पूजनं जगति जाल्म कृतमिदमपाकृते गुणैः ।
हासकरमघटते[4] नितरां शिरसीव [5]कङ्कतमपेतमूर्धजे ॥१६॥

**राज्ञः प्रति—**

मृगविद्विषामिव यदित्थमजनि [6]मिषतां पृथासुतैः ।
अस्य वनशुन इवापचितिः[7] परिभाव एव भवतां भुवोऽधिपाः ।१७।
अयमुग्रसेनतनयस्य नृपशुरपरः पशूनवन् ।
स्वामिवधमसुकरं पुरुषैः कुरुते स्म यत्परममेतदद्भुतम् ॥१८॥
ननु सर्व एव समवेक्ष्य कमपि गुणमेति पूज्यताम् ।
सर्वगुणविरहितस्य हरेः परिपूजया कुरुनरेन्द्र को [8]गुणः ॥१९॥
इति वाचमुद्धतमुदीर्य सपदि सह वेणुदारिणा[9] ।
सोढरिपुबलभरोऽसहनः स जहास दत्तकरतालमुच्चकैः ॥२०॥
कटुनापि चैद्यवचनेन विकृतिमगमन्न माधवः ।
सत्यनियतवचसं वचसा सुजनं जनाश्चलयितुं क ईशते ॥२१॥
न च तं तदेति शपमानमपि यदुनृपाः प्रचुक्रुधुः ।
शौरिसमयनिगृहीतधियः प्रभुचित्तमेव हि जनोऽनुवर्तते ॥२२॥
विहितागसो मुहुरलङ्घ्यनिजवचनदामसंयतः ।
तस्य [10]कतिथ इति तत्प्रथमं मनसा [11]समाख्यदपराधमच्युतः ।२३।

---

१ **शातित**— पराजित, २ **रोहिणीतनयः**— बलरामः, ३ ख्यातिम्, ४ निन्द्यं भवति, ५ दारुदन्तमयः केशप्रसाधनविशेषः, ६ सहमानाम् (अनादरे षष्ठी), . ७ पूजा, ८ **अगुणः** इतिच्छेदेन स्तुतिपरोप्यर्थः अत्र, ९ नरकात्मजेन, १० कतिसंख्याकः, ११ संख्यातवान्.

अथ गौरवेण परिवादमपरिगणयंस्तमात्मनः ।
प्राह मुररिपुतिरस्करणक्षुभितः स वाचमिति जाह्नवीसुतः ।२४।
विहितं मयाद्य सदसीदमपमृषित[1]मच्युतार्चनम् ।
यस्य नमयतु स चापमयं चरणः कृतः शिरसि सर्वभूभृताम् ।२५।
इति भीष्मभाषितवचोऽर्थमधिगतवतामिव क्षणात् ।
क्षोभमगमदतिमात्रमथो शिशुपालपक्षपृथिवीभृतां गणः ॥२६॥
रभसादुदस्थुरथ युद्धमनुचितभियोऽभिलाषुकाः ।
सान्द्रमुकुटकिरणोच्छलितस्फटिकांशवः सदसि मेदिनीभृतः ।२७।
हरिमप्यमंसत तृणाय कुरुपतिमजीगणन्न वा ।
मानतुलितभुवनत्रितयाः सरितः सुतादबिभयुर्न भूभृतः ॥२८॥
गुरु निःश्वसन्नथ विलोलस[2]दवथुवपुर्वचोविषम् ।
कीर्णदशनकिरणाग्निकणः फणवानिवैष विससर्ज चेदिपः ॥२९॥
किमहो नृपाः सममभीभिरुपपतिसुतैर्न पञ्चभिः ।
वध्यमभिहत [3]भुजिष्यममुं सह चानया स्थविरराजकन्यया[4] ।३०।
अथवाध्वमेव खलु यूयम् अगणितमरुद्गणौजसः ।
[5]वस्तु कियदिदमयं न मृधे मम केवलस्य मुखमीक्षितुं क्षमः ।३१।
विदतुर्यमुत्तममशेषपरिषदि नदीजधर्मजौ ।
यातु निकषमधियुद्धमसौ वचनेन किं भवतु साध्वसाधु वा ।३२।
अचिरान्मया सह गतस्य समरमुरगारिलक्ष्मणः[6] ।
तीक्ष्णविशिखमुखपीतमसृक् पततां गणः पिबतु सार्धमुर्वरा ।३३।
अभिधाय रूक्षमिति मा स्म गम इति पृथासुतेरिताम् ।
वाचमनुनयपरां स ततः सहसावकर्ण्य निरियाय संसदः ॥३४॥

---

१ असौढम्, २ दवथुः— संतापः ३ किंकरः ४ भीष्मस्य नैष्ठिक-ब्रह्मचारित्वादियं निन्दा, ५ कृष्णहननम्, ६ गरुडध्वजस्य कृष्णस्य.

गृहमागताय कृपया च कथमपि [1]निसर्गदक्षिणाः ।
क्षान्ति[2]महितमनसो जननीस्वसुरात्मजाय चुकुपुर्न पाण्डवाः ।३५।
चलितं ततोऽनभिहतेच्छमवनिपतियज्ञभूमितः ।
तूर्णमथ [3]ययुमिवानुययुर्दमघोषसूनु[4]मवनीशसूनवः ।।३६।।
क्षणमीक्षितः पथि जनेन किमिदमिति जल्पतो मिथः ।
प्राप्य शिबिरमविशङ्किमनाः [5]समनीनहद् द्रुतमनीकिनी[6]मसौ ३७
त्वरमाणशाङ्खिकसवेगवदनपवनाभिपूरितः ।
शैलकटकतटभिन्नरवः प्रणनाद सांनहनिकोऽस्य वारिजः[7] ।।३८।।
जगदन्तकालसमवेतविषद[8]विषमेरितारवम् ।
धीरनिजरवविलीनगुरुप्रतिशब्दमस्य रणतूर्यमावधि[9] ।।३९।।
सहसा ससंभ्रमविलोलसकलजनतासमाकुलम् ।
स्थानमगमदथ तत्परितश्चलितोडुमण्डलनभःस्थलोपमाम् ।४०।
दधतो भयानकतरत्वमुपगतवतः समानताम् ।
धूमपटलपिहितस्य गिरेः [10]समवर्मयन्सपदि मेदिनीभृतः ।।४१।।

**प्रश्नाः**— (१) स्पष्टीकुरुत—'परवृद्धिमत्सरि मनो हि मानिनाम्, स्फुटमापदां पदमनात्मवेदिता, वचनेन किं भवतु साध्वसाधु वा'। (२) शिशुपालेन कृतो भीष्मस्योपालम्भः स्वशब्दैर्वर्णनीयः। (३) कोपाविष्टस्य शिशुपालस्य ह्रासः कथम्? (४) चेदिपतेः सर्पोपमानेन किं सूच्यते? (५) युद्धोद्यतस्य सैन्यस्य व्यापारान् वर्णयत.

---

१ प्रकृत्या उदाराः, २ महितं पूजितं, ३ अश्वमेधीयः अश्वः, ४ शिशुपालम्, ५ सन्नद्धामकरोत्, ६ सेनाम्, ७ शङ्खः, ८ विषदः मेघः, ९ आहन्यत, १० कवचेन संनद्धाः अभूवन्.

# ७ हंसदूतः

**परिचयः** – श्रीहर्षनामा कविर्नलराजचरितप्रतिपादकं नैषधीयचरितं नाम काव्यं रचितवान्। इदं च काव्यं भारते प्रसिद्धेषु पञ्चमहाकाव्येषु अन्तर्भूतं गुणालंकाररसभावादिविषये परोत्कर्षमधिरूढं विद्वत्प्रियं च वर्तते। अत एवाभियुक्ता वदन्ति **'नैषधं विद्वदौषधम्'** इति। अयं च कविः क्रिस्ताब्दस्य द्वादशशतकस्योत्तरार्धे सञ्जातः, 'श्रीहीर–मामल्लदेवीतनयः' इति तदीयकाव्यस्य प्रतिसर्गान्तपद्यादवधार्यते। चिन्तामणिमन्त्रोपासना–लब्धतीव्रतरबुद्धिवैभवोऽयं प्रतिभासामर्थ्यविषये स्वकीयं गुरुमप्यतिशयान आसीदिति गुरुशिष्यसंवादात् ज्ञायते। जातुचित् गुरुः एतस्य बुद्धिपरीक्षायै, 'श्रीहर्ष, किं करोषि'? इति षकारद्वयगर्भितं प्रश्नं चकार, श्रीहर्षस्तु तदुत्तरम् – 'अशेषशेमुषीमुषमाषभक्षं भक्षयामीति षकारषट्कोपेतं बभाषे। अनेन एव कविना रचितानि विजय-प्रशस्तिरित्यादीनि काव्यानि तथा च अस्य खण्डनखण्डखाद्यं नाम दार्शनिको ग्रन्थश्च नितरां प्रसिद्धः।

अत्रत्यः परिच्छेदो नैषधचरितस्य प्रथमद्वितीयतृतीयसर्गेभ्यः कांश्चित् श्लोकान् उद्धृत्य संग्रथितः। अत्रैवं कथासन्दर्भः – एकदा क्रीडोद्याने विहारपरो नलभूपालः सौवर्णपक्षयुतं देवहंसं ददर्श कुतूहलेन च तं जग्राह। पश्चात् हंसेन साधिक्षेपं सदैन्यं च याचितः सः तं मुमोच। आत्मनो विमोचनेन तुष्टान्तरङ्गो हंसः कृतस्य प्रत्युपकारार्थं राजानं दमयन्तीं प्रापयितुकामः तां तथाऽवर्णयत् यथा प्रत्यक्षदर्शनाभावेऽपि नलस्तस्याम-नुररञ्ज। अथ च नलेनानुमतो हंसः विदर्भदेशे दमयन्तीसंनिधिमासाद्य नलभूपालवर्णनेन तस्या अपि नलानुरागं जनयित्वा स्वदौत्यं सफलीचकारेति।

अत्र सन्दर्भे 'अहो विधे त्वां करुणा रुणद्धि नो; ब्रुवते हि फलेन साधवो न तु कण्ठेन निजोपयोगिताम्; अपां हि तृप्ताय न वारिधारा स्वादुः सुगन्धिः स्वदते तुषारा; पित्तेन दूने रसने सितापि तिक्तायते हंसकुलावतंस' इत्यादिभिः करुणरसपरिपोषः, लोकव्यवहारः, अर्थान्तरन्यासोऽनुभवसंवादिदृष्टान्तोल्लेखनं चेत्येवमादयो गुणाः सुतरां वाचकहृदयमाहरन्ति ।

पयोधिलक्ष्मीमुषि केलिपल्वले[1] रिरंसुहंसीकलनादसादरम् ।
स तत्र चित्रं विचरन्तमन्तिके हिरण्मयं हंसमबोधि नैषधः ॥१॥
अथावलम्ब्य क्षणमेकपादिकां[2] तदा निदद्रावुपपल्वलं खगः ।
स तिर्यगावर्जितकंधरः शिरः पिधाय पक्षेण रतिक्लमालसः ॥२॥
विधाय मूर्तिं कपटेन [3]वामनीं स्वयं बलिध्वंसिविडम्बिनीमयम् ।
उपेतपार्श्वश्चरणेन मौनिना नृपः पतङ्गं समधत्त पाणिना ॥३॥
तदात्तमात्मानमवेत्य संभ्रमात् पुनः पुनः प्रायसदुत्प्लवाय सः ।
गतो विरुत्योड्डयने निराशतां करौ निरोद्धुर्दशति स्म केवलम् ४
ससंभ्रमोत्पातिततत्कुलाकुलं सरः प्रपद्योत्कतया[4]-नुकम्प्रताम् ।
तमूर्मिलोलैः पतगग्रहान्नृपं न्यवारयद्वारिरुहैः करैरिव ॥५॥
पतत्रिणा तद्रुचिरेण वञ्चितं श्रियः प्रयान्त्याः प्रविहाय पल्वलम् ।
चलत्पदाम्भोरुहनूपुरोपमा चुकूज कूले कलहंसमण्डली[5] ॥६॥
न वासयोग्या वसुधेयमीदृशस्त्वमङ्ग यस्याः पतिरुज्झितस्थितिः ।
इति प्रहाय क्षितिमाश्रिता नभः खगास्तमाचुक्रुशुरारवैः खलु ॥७॥
न जातरूपच्छदजातरूपता[6] द्विजस्य दृष्टेयमिति स्तुवन्मुहुः ।
अवादि तेनाथ स मानसौकसा जनाधिनाथः करपञ्जरस्पृशा ॥८॥

---

१ क्रीडाल्पसरसि, २ एकचरणावस्थितिम्, ३ ह्रस्वाम्, ४ उत्कण्ठया, ५ राजहंससमूहः, ६ सुवर्णपक्षसौन्दर्यम्.

धिगस्तु तृष्णातरलं भवन्मनः समीक्ष्य पक्षान् मम हेमजन्मनः ।
तवार्णवस्येव तुषारसीकरैः भवेदमीभिः कमलोदयः कियान् ।९।
न केवलं प्राणिवधो वधो मम त्वदीक्षणाद्विश्वसितान्तरात्मनः ।
विगर्हितं धर्मधनैर्निबर्हणं[1] विशिष्य विश्वासजुषां द्विषामपि १०
पदे पदे सन्ति भटा रणोद्भटाः न तेषु हिंसारस एष पूर्यते ।
धिगीदृशं ते नृपते कुविक्रमं कृपाश्रये यः कृपणे पतत्रिणि ॥११॥
फलेन मूलेन च वारिभूरुहां मुनेरिवेत्थं मम यस्य वृत्तयः ।
त्वयाद्य तस्मिन्नपि दण्डधारिणा कथं न पत्या धरणी घृणीयते १२
इतीदृशैस्तं विरचय्य वाङ्मयैः सचित्रवैलक्ष्यकृपं नृपं खगः ।
दयासमुद्रे स [2]तदाशयेऽतिथीचकार कारुण्यरसापगा गिरः ।१३।
मदेकपुत्रा जननी जरातुरा नवप्रसूतिर्वरटा तपस्विनी ।
गतिस्तयोरेष जनस्तमर्दयन् अहो विधे त्वां करुणा रुणद्धि नो १४
मुहूर्तमात्रं भवनिन्दया दयासखाः सखायः स्रवदश्रवो मम ।
निवृत्तिमेष्यन्ति परं दुरुत्तरस्त्वयैव मातः सुतशोकसागरः ।१५।
मदर्थसन्देशमृणालमन्थरः प्रियः कियद्दूर इति त्वयोदिते ।
विलोकयन्त्या रुदतोऽथ पक्षिणः प्रिये स कीदृग्भविता तव क्षणः १६
कथं विधातर्मयि पाणिपङ्कजात्तव प्रियाशैत्यमृदुत्वशिल्पिनः ।
वियोक्ष्यते वल्लभयेति निर्गता लिपिर्ललाटंतपनिष्ठुराक्षरा ।१७।
अयि स्वयूथ्यैरशनिक्षतोपमं ममाद्य वृत्तान्तमिमं बतोदिता ।
मुखानि लोलाक्षि दिशामसंशयं दशापि शून्यानि विलोकयिष्यसि ।।
ममैव शोकेन विदीर्णवक्षसा त्वया विचित्राङ्गि विपद्यते यदि
तदास्मि दैवेन हतोऽपि हा हतः स्फुटं यतस्ते शिशवः परासवः १९
तवापि हाहा विरहात्क्षुधाकुलाः कुलायकूलेषु विलुठ्य तेषु ते ।

---

१ मारणं हिंसा वा, २ तस्य हृदये.

चिरेण लब्धा बहुभिर्मनोरथैर्गताः क्षणेनास्फुटितेक्षणा मम ।२०।
सुताः कमाहूय चिराय चुंकृतैर्विधाय कम्प्राणि[1] मुखानि कं प्रति ।
कथासु शिष्यध्वमिति प्रमील्य स स्नुतस्य सेकाद्बुबुधे नृपाश्रुणः ॥
इत्थममुं विलपन्तममुञ्चत् दीनदयालुतयाऽवनिपालः ।
रूपमदर्शि धृतोऽसि यदर्थं गच्छ यथेच्छमथेत्यभिधाय ॥२२॥

आनन्दजाश्रुभिरनुस्रियमाणमार्गान्
प्राक्शोकनिर्गमितनेत्रपयःप्रवाहान् ।
चक्रे स चक्रनिभचङ्क्रमणच्छलेन
[2]नीराजनां जनयतां निजबान्धवानाम् ॥२३॥

अधिगत्य जगत्यधीश्वरादथ मुक्ति पुरुषोत्तमात्ततः ।
वचसामपि गोचरो न यः स तमानन्दमविन्दत द्विजः ॥२४॥
अयमेत्य तडाकनीडजैर्लघु[3] पर्यव्रियताथ शङ्कितैः ।
उदडीयत वैकृतात्करग्रहजादस्य विकस्वरस्वरैः ॥२५॥
वहतो बहुशैवलक्ष्मतां धृतरुद्राक्षमधुव्रतं खगः ।
स नलस्य ययौ करं पुनः सरसः कोकनदभ्रमादिव ॥२६॥
पतगश्चिरकाललालनादतिविश्रम्भमवापितो नु सः ।
अतुलं विदधे कुतूहलं भुजमेतस्य भजन्महीभुजः ॥२७॥
नृपमानसमिष्टमानसः स निमज्जत्कुतुकामृतोर्मिषु ।
अवलम्बितकर्णशष्कुलीकलसीकं रचयन्नवोचत ॥२८॥
मृगया न विगीयते नृपैरपि धर्मागममर्मपारगैः ।
स्मरसुन्दर मां यदत्यजस्तव धर्मः सदयोदयोज्ज्वलः ॥२९॥
अबलस्वकुलाशिनो झषान्निजनीडद्रुमपीडिनः खगान् ।
अनवद्यतृणार्दिनो मृगान्मृगयाघाय न भूभुजां घ्नताम् ॥३०॥

---

१ चलानि, २ आरार्तिकाम्, ३ शीघ्रम्.

यदवादिषमप्रियं तव प्रियमाधाय नुनुत्सुरस्मि तत् ।
कृतमातपसंज्वरं तरोरभिवृष्यामृतमंशुमानिव ॥३१॥
पतगेन मया जगत्पतेरुपकृत्यै तव किं प्रभूयते ।
इति वेद्मि न तु त्यजन्ति मां तदपि प्रत्युपकर्तुमर्तयः ॥३२॥
अचिरादुपकर्तुराचरेदथवात्मौपयिकीमुपक्रियाम् ।
पृथुरित्थमथाणुरस्तु सा न विशेषे विदुषामिह ग्रहः ॥३३॥
भविता न विचारचारु चेत्तदपि श्रव्यमिदं मदीरितम् ।
खगवागियमित्यतोऽपि किं न मुदं धास्यति [1]कीरगीरिव ॥३४॥
स जयत्यरिसार्थसार्थकीकृतनामा किल भीमभूपतिः ।
यमवाप्य विदर्भभूः प्रभुं हसति द्यामपि शक्रभर्तृकाम् ॥३५॥
[2]दमनादमनाक्प्रसेदुषस्तनयां तथ्यगिरस्तपोधनात् ।
वरमाप स [3]दिष्टविष्टपत्रितयानन्यसदृग्गुणोदयाम् ॥३६॥
भुवनत्रयसुभ्रुवामसौ [4]दमयन्ती कमनीयतामदम् ।
उदियाय यतस्तनुश्रिया दमयन्तीति ततोऽभिधां ययौ ॥३७॥
सरसीः परिशीलितुं मया [5]गमिकर्मीकृतनैकनीवृता[6] ।
अतिथित्वमनायि सा दृशोः सदसत्संशयगोचरोदरी ॥३८॥
अवधृत्य दिवोऽपि [7]यौवतैर्न सहाधीतवतीमिमामहम् ।
कतमस्तु विधातुराशये पतिरस्या वसतीत्यचिन्तयम् ॥३९॥
अनुरूपमिमं विलोकयन्नथ सर्वेष्वपि पूर्वपक्षताम्[8] ।
युवसु व्यपनेतुमक्षमः त्वयि [9]सिद्धान्तधियं न्यवेशयम् ॥४०॥
अनया तव रूपसीमया कृतसंस्कारविबोधनस्य मे ।

---

१ शुकवाक्, २ दमनसंज्ञकतपोधनात्, ३ दिष्टः कालः, विष्टपम् भुवनम्, ४ दमयन्ती, ५ गतिविषयीकृता नैकजनपदा येन, ६ नीवृत् जनपदः, ७ स्त्रीसमूहैः, ८ अयोग्यरूपत्वमित्यर्थः, ९ अनुरूपत्वबुद्धिम्.

चिरमप्यवलोकिताद्य सा स्मृतिमारूढवती शुचिस्मिता ॥४१॥
तव रूपमिदं तया विना विफलं पुष्पमिवावकेशिनः[१] ।
इयमृद्धधना वृथावनी [२]स्ववनी संप्रवदत्पिकापि का ॥४२॥
तदहं विदधे तथातथा दमयन्त्याः सविधे तव स्तवम् ।
हृदये निहितस्तया भवान् अपि नेन्द्रेण यथापनीयते ॥४३॥
तव संमतिमेव केवलामधिगन्तुं धिगिदं निवेदितम् ।
ब्रुवते हि फलेन साधवो न तु कण्ठेन निजोपयोगिताम् ॥४४॥
तदिदं विशदं वचोमृतं परिपीयाभ्युदितं द्विजाधिपात् ।
अतितृप्ततया विनिर्ममे स तदुद्गारमिव स्मितं सितम् ॥४५॥
परिमृज्य भुजाग्रजन्मना[३] पतगं कोकनदेन नैषधः ।
मृदु तस्य मुदेऽकिरद्गिरः प्रियवादामृतकूपकण्ठजाः ॥४६॥
न तुलाविषये तवाकृतिर्न वचोवर्त्मनि ते सुशीलता ।
त्वदुदाहरणाकृतौ[४] गुणा इति सामुद्रकसारमुद्रणा ॥४७॥
न सुवर्णमयी तनुः परं ननु किं वागपि तावकी यथा ॥
न परं पथि पक्षपातितानवलम्बे[५] किमु मादृशेऽपि सा ॥४८॥
भृशतापभृता मया भवान्मरुदासादि[६] तुषारसारवान् ।
धनिनामितरः सतां पुनर्गुणवत्संनिधिरेव सन्निधिः ॥४९॥
शतशः श्रुतिमागतैव सा त्रिजगन्मोहमहौषधिर्मम ।
अमुना तव शंसितेन तु स्वदृशैवाधिगतामवैमि ताम् ॥५०॥
तव वर्त्मनि वर्ततां शिवं पुनरस्तु त्वरितं समागमः ।
अयि साधय साधयेप्सितं स्मरणीयाः समये वयं वयः[७] ॥५१॥

---

१ वन्ध्यवृक्षस्य, २ विलासवाटिका, ३ करेण, ४ यत्र आकृतिः तत्र गुणाः इति सामुद्रकशास्त्रनियमः, ५ आकाशे निर्गतिके च, ६ **मरुत् वायुः आसादि** प्राप्तः- ७ हे विहग.

अथ भीमसुतावलोकनैः सफलं कर्तुमहस्तदेव सः ।
क्षितिमण्डलमण्डनायितं नगरं कुण्डिनमण्डजो ययौ ॥५२॥
अथ भीमभुजेन पालिता नगरी मञ्जुरसौ धराजिता ।
पतगस्य जगाम दृक्पथं हरशैलोपमसौधराजिता ॥५३॥

विधुकरपरिरम्भादात्मनिष्यन्दपूर्णैः
शशिदृषदुपक्लृप्तैरालवालैस्तरुणाम् ।
विफलितजलसेकप्रक्रियागौरवेण
व्यरचि स हृतचित्तस्तत्र भैमीवनेन ॥५४॥

अथ कनकपतत्रस्तत्र तां राजपुत्रीं,
सदसि सदृशभासां विस्फुरन्तीं सखीनाम् ।
उडुपरिषदि मध्यस्थायिशीतांशुलेखा-
नुकरणपटुलक्ष्मीमक्षिलक्षीचकार ॥५५॥

आकुंचिताभ्यामथ पक्षतिभ्यां नभोविभागात्तरसावतीर्य ।
निवेशदेशाततधूतपक्षः पपात भूपावुपभैमि हंसः ॥५६॥
आकस्मिकः पक्षपुटाहतायाः क्षितेस्तदा यः स्वन उच्चचार ।
द्रागन्यविन्यस्तदृशः स तस्याः संभ्रान्तमन्तःकरणं चकार ॥५७॥
नेत्राणि वैदर्भसुतासखीनां विमुक्ततत्तद्विषयग्रहाणि ।
प्रापुस्तमेकं निरुपाख्यरूपं ब्रह्मेव चेतांसि यतव्रतानाम् ॥५८॥
हसं तनौ सन्निहितं चरन्तं मुनेर्मनोवृत्तिरिव स्वकायाम् ।
ग्रहीतुकामादरिणा शयेन[1] यत्नादसौ निश्चलतां जगाहे ॥५९॥
तामिङ्गितैरप्यनुमाय मायामयं न भैम्या वियदुत्पपात ।
तत्पाणिमात्मोपरिपातुकं तु मोघं वितेने प्लुतिलाघवेन ॥६०॥
पदे पदे भाविनि भाविनी[2] तं यथा करप्राप्यमवैति नूनम् ।

---

१ पाणिना, २ भावः— हंसग्रहणानुसन्धानं—तद्वती·

तथासखेलं चलता लतासु प्रतार्य तेनाचकृषे कृशाङ्गी ॥६१॥
रुषा निषिद्धालिजनां यदैनां छायाद्वितीयां कलयांचकार ।
तदा श्रमाम्भःकणभूषिताङ्गीं स कीरवन्मानुषवागवादीत् ।६२।
अये कियद्यावदुपैषि दूरं व्यर्थं परिश्राम्यसि वा किमित्थम् ।
उदेति ते भीरपि किं नु बाले विलोकयन्त्या न घना वनाली:[1] ६३
धार्यः कथंकारमहं भवत्या वियद्विहारी वसुधैकगत्या ।
अहो शिशुत्वं तव खण्डितं न स्मरस्य सख्या वयसाप्यनेन ।६४।
सहस्रपत्रासनपत्रहंसवंशस्य पत्राणि पतत्रिणः स्मः ।
अस्मादृशां चाटुरसामृतानि स्वर्लोकलोकेतरदुर्लभानि ॥६५॥
स्वर्गापगाहेममृणालिनीनां नालामृणालाग्रभुजो भजामः ।
अन्नानुरूपां तनुरूपऋद्धिं कार्यं निदानाद्धि गुणानधीते ॥६६॥
धातुर्नियोगादिह नैषधीयं लीलासरः सेवितुमागतेषु ।
हैमेषु हंसेष्वहमेक एव भ्रमामि भूलोकविलोकनोत्कः ॥६७॥
इष्टेन पूर्तेन नलस्य वश्याः स्वर्भोगमत्रापि सृजन्त्यमर्त्याः ।
महीरुहा दोहदसेकशक्तेराकालिकं कोरकमुद्गिरन्ति ॥६८॥
सुवर्णशैलादवतीर्य तूर्णं स्ववाहिनीवारिकणावकीर्णैः ।
तं वीजयामः स्मरकेलिकाले पक्षैर्नृपं चामरबद्धसख्यः ॥६९॥
अस्मत्किल श्रोत्रसुधां विधाय रम्भा चिरं भामतुलां नलस्य ।
तत्रानुरक्ता तमनाप्य भेजे तन्नामगन्धान्नलकूबरं[2] सा ॥७०॥
अलं सजन्धर्मविधौ विधाता रुणद्धि मौनस्य मिषेण वाणीम् ।
तत्कण्ठमालिङ्ग्य रसस्य तृप्तां न वेद तां वेदजडः स वक्राम् ७१
श्रियौ नरेन्द्रस्य निरीक्ष्य तस्य स्मरामरेन्द्रावपि न स्मरामः ।
वासेन तस्मिन्[3]क्षमयोश्च सम्यग्बुद्धौ न दध्मः खलु शेषबुद्धौ ।७२।

---

१ वनपङ्क्तीः, २ कुबेरपुत्रम्, ३ क्षमा (भूः) क्षमा च तयोः भूक्षमयोः

यदि त्रिलोकी गणनापरा स्यात्,तस्याः समाप्तिर्यदि नायुषः स्यात्।
पारेपरार्धं गणितं यदि स्यात्,[1]गणेयनिःशेषगुणोऽपि स स्यात् ।७३।
तस्यैव वा यास्यसि किं न हस्तं, दृष्टं मनः केन विधेः प्रविश्य ।
अजातपाणिग्रहणासि तावद्रूपस्वरूपातिशयाश्रयश्च[2] ।।७४।।
निशा शशाङ्कं शिवया गिरीशं श्रिया हरिं योजयतः प्रतीतः ।
विधेरपि [3]स्वारसिकः प्रयासः परस्परं योग्यसमागमाय ।।७५।।
अन्येन पत्या त्वयि योजितायां [4]विज्ञत्वकीर्त्या [5]गतजन्मनो वा ।
जनापवादार्णवमुत्तरीतुं [6]विधा विधातुः कतमा [7]तरीः स्यात् ।७६।
आस्तां तदप्रस्तुतचिन्तयालं, मयासि तन्वि श्रमितातिवेलम् ।
सोऽहं तदागः परिमार्ष्टुकामः किमीप्सितं ते विदधेऽभिधेहि ।७७।
इतीरिता पत्ररथेन तेन [8]ह्रीणा च हृष्टा च बभाण भैमी ।
चेतो नलं कामयते मदीयं नान्यत्र कुत्रापि च साभिलाषम् ।७८।

हंसः—[9]यद्येवं तर्हि तव कृतेऽहं नलं याचेय । किन्तु—

पितुर्नियोगेन निजेच्छया वा युवानमन्यं यदि वा वृणीषे ।
त्वदर्थमर्थित्वकृति[1] प्रतीतिः कीदृङ् मयि स्यान्निषधेश्वरस्य ।७९।
[10]श्रवः प्रविष्टा इव तद्गिरस्ता विधूय [11]वैमत्यधुतेन मूर्ध्ना ।
ऊचे ह्रियोऽपि [12]श्लथितानुरोधा पुनर्धरित्रीपुरुहूतपुत्री ।।८०।।
साधु त्वया तर्कितमेतदेव स्वेनानलं यत्किल संश्रयिष्ये ।
विनामुना स्वात्मनि तु ग्रहतुं मृषागिरं त्वां नृपतौ न कर्तुम् ।८१।
अनैषधायैव जुहोति तातः किं मां कृशानौ न शरीरशेषाम् ।
ईष्टे तनूजन्मतनोः स नूनं मत्प्राणनाथस्तु नलस्तथापि ।।८२।।

---

१ **गणेयः** गणयितुं योग्यः, २ अकृत्रिमसौन्दर्यवती, ३ स्वेच्छया प्रवृत्तः, ४, ५ सर्वज्ञत्वयशसा अतिक्रान्तजन्मनः, ६ उपायः, ७ नौका, ८ लज्जिता, ९ याच्ञाकारिणि, १० कर्णम्, ११ असंमत्या कम्पितेन, १२ त्यक्तत्रपा इत्यर्थः

श्रुतः स दृष्टश्च हरित्सु मोहात् ध्यातश्च [1]नीरन्ध्रितबुद्धिधारम् ।
ममाद्य तत्प्राप्तिरसुव्ययो वा हस्ते तवास्ते द्वयमेकशेषः ॥८३॥

अभ्यर्थनीयः स गतेन राजा त्वया न [2]शुद्धान्तगतो मदर्थम् ।
प्रियास्यदाक्षिण्यबलात्कृतो हि तदोदयेदन्यवधूनिषेधः ॥८४॥

शुद्धान्तसम्भोगनितान्ततुष्टे न नैषधे कार्यमिदं निगाद्यम् ।
अपां हि तृप्ताय न वारिधारा स्वादुः सुगन्धिः [3]स्वदते तुषारा ।८५।

त्वया निधया न गिरो मदर्थाः क्षुधा कदुष्णे हृदि नैषधस्य ।
पित्तेन दूने रसने सितापि तिक्तायते हंसकुलावतंस ॥८६॥

विज्ञेन विज्ञाप्यमिदं नरेन्द्रे तस्मात्त्वयास्मिन्समयं समीक्ष्य ।
आत्यन्तिकासिद्धिविलम्बिसिद्ध्योः कार्यस्य कार्यस्य[4] शुभा विभाति

तथाभिधात्रीमथ राजपुत्रीं निर्णीय तां नैषधबद्धरागाम् ।
अमोचि चञ्चूपुटमौनमुद्रा विहायसा तेन विहस्य भूयः ॥८८॥

धन्याऽसि वैदर्भि गुणैरुदारैर्यया समाकृष्यत नैषधोऽपि ।
इतः स्तुतिः का खलु चन्द्रिकाया यदब्धिमप्युत्तरलीकरोति ।८९।

नलेन [5]भायाः शशिना निशेव त्वया स भायान्निशया शशीव ।
पुनःपुनस्तद्युगयुग्विधाता [6]योग्यामुपास्ते नु युवां [7]युयुक्षुः ।९०।

इत्यालपत्यथ पतत्रिणि तत्र भैमीं,
सख्यश्चिरात्तदनुसन्धिपराः[8] परीयुः[9] ।
शर्मास्तु ते विसृज मामिति सोऽप्युदीर्य,
वेगाज्जगाम निषधाधिपराजधानीम् ॥९१॥

---

१ नीरन्ध्रिता निरन्तरा, २ अन्तःपुरगतः, ३ रोचते, ४ का आर्यस्य इतिच्छेदः, ५ शोभस्व, ६ अभ्यासम्, ७ योक्तुम् इच्छुः, ८ तदन्वेषणपराः, ९ पर्यवेष्टयन्.

प्रश्नाः— (१) हंसकृतो नलस्योपालम्भः स्ववाक्यैर्लिख्यताम् । (२) नलदमयन्त्योः संघटने हंसस्य क उद्देशः ? (३) 'निशा शशाङ्कं शिवया गिरीशम्, नलेन भाया शशिना निशेव' इतिपद्यद्वये कथितमुपमानोपमेय-भावं स्फुटीकुरुत । (४) दमयन्त्या नलविषये स्वानुरागनिर्भरः तद्वरणसत्यसंकल्पश्च कथं प्रकटितः ? (५) कीदृशं भैमीवचनम् ?

---

# ८ काव्यशास्त्रविनोदः

पिनाकफणिबालेन्दुभस्ममन्दाकिनीयुता ।
पवर्गरचिता मूर्तिरपवर्गप्रदायिनी ॥ १ ॥
न केनापि श्रुतं दृष्टं वारिणा वारि शुष्यति ।
अहो भागीरथीवारा[१] भवसिन्धुर्विशुष्यति ॥ २ ॥
अस्थि नास्ति शिरो नास्ति बाहुरस्ति निरङ्गुलिः ।
नास्ति पादद्वयं गाढमङ्गमालिङ्गति स्वयम् ॥ ३ ॥[२]
क्षीणः क्षीणः समीपत्वं पूर्णः पूर्णोऽतिदूरताम् ।
उपैति मित्राद्यश्चन्द्रो युक्तं तन्मलिनात्मनः ॥ ४ ॥
[३]चतुरङ्गबलो राजा जगतीं वशमानयेत् ।
अहं [४]पञ्चाङ्गबलवान् आकाशं वशमानये ॥ ५ ॥
जीवनग्रहणे नम्रा गृहीत्वा पुनरुन्नताः
किं कनिष्ठाः किमु ज्येष्ठा [५]घटीयन्त्रस्य दुर्जनाः ॥ ६ ॥

---

१ भागीरथीजलेन. २ Coat; ३ हस्त्यश्वरथपदातिसेनायुक्तः, ४ तिथिवारनक्षत्रयोगकरणज्ञानवान्. ५ येन यन्त्रेण जलमुद्ध्रियते तस्य.

अपराधिनि कोपश्चेत् कोपे कोपः कथं न ते ।
सर्वेषां पुरुषार्थानां प्रसह्य परिपन्थिनि ॥ ७ ॥

द्विधा त्रिधा चतुर्धा च तमेकमपि शत्रवः ।
पश्यन्तः स्पर्धया सद्यः स्वयं पञ्चत्वमाययुः ॥ ८ ॥

शंकरे भक्तिमान् स्याच्चेत् शं करे[1] तस्य निश्चितम् ।
या तनावात्मबुद्धिस्तु यातना सा सनातनी ॥९॥

भो जनाः किं बहूक्तेन भवद्भिर्यद्यपेक्षते ।
यशस्तद्व्युत्क्रम स्तर्हि स्थाप्यतां कृतिषु ध्रुवम् ॥ १० ॥

यस्य षष्ठी चतुर्थी च विहस्य च विहाय च ।
अहं कथं द्वितीया स्यात् द्वितीया स्यामहं कथम् ? ॥११॥

पुत्र इत्येव पितरि कन्यकेत्येव मातरि ।
गर्भप्रश्नेषु कथयन् दैवज्ञो[2] विजयी भवेत् ॥ १२ ॥

पात्रे त्यागी गुणे रागी संविभागी च बन्धुषु ।
शास्त्रे बोद्धा रणे योद्धा पुरुषः पञ्चलक्षणः ॥ १३ ॥

सौवर्णानि सरोजानि निर्मातुं सन्ति शिल्पिनः ।
तत्र सौरभनिर्माणे चतुरश्चतुराननः ॥ १४ ॥

कोऽपि प्रभुत्वमापन्नः मनःपूतं समाचरेत् ।
पाणिनेर्न नदी[3] गङ्गा यमुना वा, स्थली नदी ॥१५॥

पण्डितः कीदृशं ब्रूते, को रोगी, कश्च नास्तिकः ।
कं हि चन्द्रं नमस्यन्ति, किं [4]सूत्रं पाणिनेर्वद ॥१६॥

आशा हि परमं दुःखं नैराश्यं परमं सुखम् ।
यदाशासहितस्तान्तः निराशः शान्त उच्यते ॥१७॥

---

१ शयः करः २ ज्योतिःशास्त्रज्ञः, ३ यूस्त्र्याख्यौ नदी (१–४–३),
४ अर्थवदधातुरप्रत्ययः प्रातिपदिकम् (१–२–४५).

पयस्विनीनां धेनूनां ब्राह्मणः प्राप्य विंशतिम् ।
तास्वष्टादश विक्रीय गृहीत्वैकां गृहं गतः ॥१८॥
पाण्डवानां सभामध्ये दुर्योधन उपागतः ।
तस्मै गां च सुवर्णं च सर्वाण्याभरणानि च ॥१९॥
भगवन्नतिपीडयन्ति मां रिपवः काममुखाः सदा हृदिस्थाः ।
अयि नाशय तेषु तावदेकं स्वयमन्ये खलु पञ्चतां व्रजेयुः ।२०।
बहुर्भकं महाभगमपि कान्ताभरसमन्वितं भवनम् ।
भवति सदाभरणस्थलमपि [1]भावस्थितिवर्जितं तु वनम् ॥२१॥
बालसखित्वमकारणहास्यं स्त्रीषु विवादमसज्जनसेवा ।
गर्दभयानमसंस्कृतवाणी षड्भिर्ना लघुतामुपयाति ॥२२॥
धन्य धन्य रघुनन्दन त्वया पर्यणायि जनकस्य [2]नन्दिनी ।
कार्यमेतदपरेण दुष्करं, [3]युक्तमेतदजवंशजन्मनः ॥२३॥
यथा चतुर्भिः कनकं परीक्ष्यते निघर्षणच्छेदनतापताडनैः ।
तथा चतुर्भिः पुरुषः परीक्ष्यते श्रुतेन शीलेन गुणेन कर्मणा ।२४।
प्रभुर्विवेकी, प्रमदा सुशीला, तुरङ्गमः शस्त्रनिपातधीरः ।
विद्वान् विरागी,धनिकः प्रदाता, भूमण्डलस्याभरणानि पञ्च ।२५।
अमी तिलास्तैलिक नूनमद्य स्नेहादवस्थां भवतोपनीताः ।
द्वेषोऽभविष्यद्यदमीषु नित्यं तदा ह्यवस्थां [4]किमिवाकरिष्यः ।२६।
आनन्दताण्डवपुरे द्रविडस्य गेहे
चित्रं [5]वसिष्ठवनितासममाज्यपात्रम् ।
विद्युल्लतेव परिनृत्यति तत्र [6]दर्वी
धारां विलोकयति योगबलेन सिद्धः ॥२७॥

---

१ अक्षररहितम् अथवा भवर्णरहितम्, २ सीता स्वसा वा, ३ अजः रामस्य पितामहः मेषः वा, ४ अव्ययमिदम्, ५ अरुन्धतीनक्षत्रम्, ६ पात्रविशेषः

अलिरनुसरति परिमलं, लक्ष्मीरनुसरति नयगुणसमृद्धम् ।
निम्नमनुसरति सलिलं, विधिलिखितं बुद्धिरनुसरति ॥२८॥
कः कौ के कं कौ कान् हसति च हसतो हसन्ति तन्वङ्ग्याः ।
दृष्ट्वा पल्लवमधरः पादौ पद्मौ[1] च कोरकान् दन्ताः ॥२९॥
अव्याकरणमधीतं भिन्नद्रोण्या[2] तरङ्गिणीतरणम्[3] ।
भेषजमपथ्यसहितं त्रयमिदमकृतं वरं न कृतम् ॥३०॥
अनुयातानेकजनः परपुरुषैरुह्यतेऽस्य निजदेहः ।
अधिकारस्थः पुरुषः शव इव न शृणोति वीक्षते कुमतिः ॥३१॥
प्राप्य चलानधिकारान् शत्रुषु मित्रेषु चाथ विद्वत्सु ।
नापकृतं नोपकृतं न सत्कृतं किं कृतं तेन ॥३२॥
राजाश्रयस्तस्करताश्वपण्यमाथर्वणं[4] चापि समुद्रयानम् ।
एतानि सिद्ध्यन्ति महाफलानि विपर्यये प्राणहराणि पञ्च ।३३।
पदानि भव्यान्यपि काव्यरीतिमस्थानदत्तानि न शोभयन्ते ।
नासाग्रलग्नेन भवेन्मुखश्रीस्ताटङ्कबिम्बेन[5] कथं तरुण्याः ॥३४॥
सौमित्रिर्वदति विभीषणाय लङ्कां
देहि त्वं भुवनपते विनैव कोशम् ।
एतस्मिन् रघुपतिराह वाक्यमेतद्
विक्रीते करिणि किमङ्कुशे विवादः ॥३५॥
रथः शरीरं पुरुषस्य राजन्नात्मा नियन्तेन्द्रियाण्यस्य चाश्वाः ।
तैरप्रमत्तः कुशली सदश्वैर्दान्तैः सुखं याति रथीव धीरः ॥३६॥
धारा यत्र पिनाकपाणिपरशोराकुण्ठिता वक्षसि,
यत्राकुण्ठितदन्तिदन्तमुसलान्याचूर्णितान्याहवे ।
तन्मे तावदुरो नृसिंहकरजैर्व्यादीर्यते साम्प्रतम् ।
दैवे दुर्जनतां गते तृणमपि प्रायेण वज्रायते ॥३७॥

---

१ 'वा पुंसि पद्मम्' इत्यमरः. २ द्रोणी नौका, ३ नदी, ४ अथर्ववेदोक्तो जारणमारणादिविधिः, ५ कर्णभूषणम्.

भग्नाशस्य [1]करण्डपिण्डिततनोर्म्लानेन्द्रियस्य क्षुधा ।
कृत्वाखुर्विवरं स्वयं निपतितो नक्तं मुखे भोगिनः[2] ।
तृप्तस्तत्पिशितेन सत्वरमसौ तेनैव यातः पथा ।
लोकाः पश्यत दैवमेव हि नृणां वृद्धिक्षये कारणम् ॥३८॥
[3]खल्वाटो दिवसेश्वरस्य किरणैः सन्तापितो मस्तके,
वाञ्छन् देशमनामयं विधिवशात्तालस्य मूलं गतः ।
तत्राप्यस्य महाफलेन पतता भग्नं सशब्दं शिरः
प्रायो गच्छति यत्र भाग्यरहितस्तत्रैव यान्त्यापदः ॥३९॥
जिह्वैकैव सतामुभे फणवतां स्रष्टुश्चतस्रश्च ताः,
ताः सप्तैव [4]विभावसोर्नियमिताः षट् कार्तिकेयस्य च ।
पौलस्त्यस्य दशाभवन् [5]फणिपतेर्जिह्वासहस्रद्वयं,
जिह्वा लक्षशतैककोटिनियमो नो दुर्जनानां मुखे ॥४०॥
[6]ऊर्णां नैष बिभर्ति, नैष विषयो दोहस्य वाहस्य वा
तृप्तिर्नास्य महोदरस्य बहुभिर्घासैः पलालैरपि ।
हा कष्टं कथमस्य पृष्ठशिखरे गोणी समारोप्यते
को गृह्णाति कपर्दकैरलमहो ग्राम्यैर्गजो हास्यते ॥४१॥
विद्वद्राजशिखामणे तुलयितुं धाता त्वदीयं यशः ।
कैलासं च निरीक्ष्य तत्र लघुतां निक्षिप्तवान् पूर्तये ।
[7]उक्षाणं तदुपर्युमासहचरं[8] तन्मूर्ध्नि गङ्गाजलं,
तस्याग्रे फणिपुङ्गवं तदुपरि स्फारं सुधादीधितिम् ॥४२॥
अयश्चणकचर्वणं, फणिफणामणेः कर्षणं,
करेण गिरितोलनं, जलनिधेः पदा लङ्घनम् ।

---

१ करण्डः पेटिका, २ सर्पस्य, ३ जरया केशरहितमस्तकः, ४ अग्नेः, ५ शेषस्य, ६ सुन्दरलोमानि, ७ नन्दिनम्, ८ शङ्करम्.

प्रसुप्तहरिबोधनं, निशितखड्गसंस्पर्शनम्
कदाचिदखिलं भवेन्न च शठाद्धनस्यार्जनम् ॥४३॥

परार्थे यः पीडामनुभवति भङ्गेऽपि मधुरो ।
यदीयः सर्वेषामिह खलु विकारोप्यभिमतः ।
न संप्राप्तो वृद्धिं यदि स भृशमक्षेत्रपतितः ।
किमिक्षोर्दोषोऽसौ न पुनरगुणाया मरुभुवः ॥४४॥

[1]सर्वस्वापहरो न तस्करगणो, रक्षो न रक्ताशनः,
सर्पो नैव बिलेशयोऽखिलनिशाचारी न भूतोऽपि च ।
अन्तर्धानपटुर्न सिद्धपुरुषो, नाप्याशुगो मारुतः,
तीक्ष्णास्यो न च सायकस्तमिह ये जानन्ति ते पण्डिताः ॥४५॥

भिक्षुः क्वास्ति बलेर्मखे, पशुपतिः, किं नास्त्यसौ गोकुले,
मुग्धे पन्नगभूषणः, सखि सदा शेते च तस्योपरि ।
आर्ये मुञ्च विषादमाशु, कमले नाहं प्रकृत्या चला
चेत्थं वै गिरिजासमुद्रसुतयोः संभाषणं पातु वः ॥४६॥

श्रीरामस्य नखेन्दुनास्मि विजितः खेन्दुः पुनः सन्निति
क्षीणात्माथ निरेति तत्कुलगुरुं वक्तुं जडध्यात्मजः ।
रामश्चन्द्र इवेति तद्विषयितां नीतोऽसि शिष्टैः सखे
तत्किं ग्लायसि याहि सान्त्वित इति प्रायः शनैर्वर्धते ॥४७॥

जनस्थाने भ्रान्तं कनकमृगतृष्णान्धितधिया
वचो वैदेहीति प्रतिपदमुदश्रु प्रलपितम् ।
कृतालङ्काभर्तुर्वदनपरिपाटीषुघटना
मयाप्तं रामत्वं कुशलवसुता न त्वधिगता ॥४८॥

---

१ सर्वस्व + अपहरः (चोरः), सर्व+स्वाप+हरः (निद्राविघातकः).

यन्नाम्नः प्रथमाक्षरं विजयते भानौ, द्वितीयाक्षरं
नित्यं नृत्यति सत्कवीन्द्रवदने, भूत्वान्त्यवर्णद्वयम् ।
रामो रावणमाजघान समरे, शम्भोः शिरःशालिनी
सा सर्वाघविनाशिनी विजयतां, जानातु तां पण्डितः ॥४९॥[1]

क्षोणी कं सहते, करोति दिवि का नृत्यं, शिवायाः पति-
र्भूतानां कमयुङ्क्त जीवहरणे, का रामशत्रोः पुरी ।
कं रक्षन्ति च साधवः, पशुपतेः किं वाहनं प्रोच्यता-
मालोमप्रतिलोमशास्त्रचतुरैरेकं द्वयोरुत्तरम् ॥५०॥[2]

प्रश्नाः– (१) अस्मिन् पाठे कांस्कान् विषयान् उद्दिश्य पद्यानि वर्तन्ते ? (२) कानि कानि लाघवकारणानि ? (३) अधिकारिणः पुरुषस्य के गुणाः ? के च दोषाः ? (४) 'विक्रीते करिणि किमङ्कुशे विवादः' इति भाषमाणस्य रामस्य कोऽभिप्रायः ? (५) मानवस्य दैवाधीनतां वर्णयितुं कविवर्णितोदाहरणं समर्थयत. (६) ग्राम्या गजं कुत उपहसन्ति ? (७) विद्वद्यशस्तुलयितुं धात्रोपयुक्तानि साधनानि कानि ? (८) शठाद्धनाकर्षणस्यासंभवः कविना कथंकारं वर्णितः ?

---

# ९ सुभाषितानि

अस्मिन् पाठे प्रसिद्धानां पुरातनानां तेषां तेषां कवीनां ग्रन्थेभ्यः समुद्धृतानां सुभाषितानां संग्रहः कृतः । अत एव नात्र कविकाल-परिचयादीनामावश्यकता । संस्कृतवाङ्मये सुभाषितं नाम विशेषपरिश्रमं

---

१ भागीरथी, २ भारं रम्भा, कालं लङ्का, दीनं नन्दी.

विना सुकुमारमतीनामपि व्यवहारज्ञानसम्पादनसाधनम् । एतस्मिन् संकीर्ण-संग्रहे कानिचित् सुभाषितानि गुरुदेवतावन्दनपराणि, अपराणि सुजनस्तुति-पराणि, इतराणि दुर्जननिन्दापराणि, अन्यानि च सद्गुणस्वाभिमानोत्साह-विनयसाहसादिपराणि इत्येवं विविधविषयपराणि मनोहारीण्येतानि सुभाषितानि । एतेषां चोपयोगः समाजे स्वकीयं मतं प्रतिपादयितुं, परमतं निराकर्तुं, निबन्धादीन् रचयितुम्, अन्त्याक्षर्यादि पठितुं चेति बहुभिः प्रकारैर्भवेत् । अतः सर्वेऽप्यत्रत्याः श्लोका यथा कण्ठगता भवेयुः तथा विद्यार्थिनः प्रयतेरन् इति दृढं विश्वसिमः ।

तव करकमलस्थां स्फाटिकीमक्षमालां
नखकिरणविभिन्नां दाडिमीबीजबुद्ध्या ।
प्रतिकलमनुकर्षन् येन कीरो निषिद्धः
स भवतु मम भूत्यै वाणि ते मन्दहासः ॥१॥
सुभाषितमयद्रव्यसंग्रहं न करोति यः ।
[1]प्रस्तावयज्ञे सम्प्राप्ते कां प्रदास्यति दक्षिणाम् ॥२॥
स्वच्छन्दत्वं धनार्थित्वं प्रेमभावोऽथ भोगिता ।
अविनीतत्वमालस्यं विद्याविघ्नकराणि षट् ॥३॥
एकं हन्यान्न वा हन्यादिषुर्मुक्तो धनुष्मता ।
बुद्धिर्बुद्धिमतोत्सृष्टा हन्याद्राष्ट्रं सराजकम् ॥४॥
गौरवं प्राप्यते दानात् न तु वित्तस्य सञ्चयात् ।
स्थितिरुच्चैः पयोदानां पयोधीनामधः स्थितिः ॥५॥
शिरसा धार्यमाणोऽपि सोमः सौम्येन शम्भुना ।
तथापि कृशतां धत्ते, कष्टः खलु पराश्रयः ॥६॥
वरं दारिद्र्यमन्यायप्रभवाद्विभवादपि ।
वरं शरीरे कृशता, स्थूलता न तु शोथतः ॥७॥

---

१ विविधकथालापरूपयज्ञे.

हरिणापि हरेणापि ब्रह्मणापि सुरैरपि ।
ललाटलिखिता रेखा परिमार्ष्टुं न शक्यते ॥८॥
न देशो मनुजैर्हीनो न मनुष्या निरामयाः ।
ततः सर्वत्र वैद्यानां सुसिद्धा एव वृत्तयः ॥९॥
वैद्यानां शारदी माता पिता च कुसुमाकरः ।
यमदंष्ट्रा स्वसा प्रोक्ता हितभुङ्मितभुग्रिपुः ॥१०॥
विषधरतोऽप्यतिविषमः खल इति न मृषा वदन्ति विद्वांसः ।
यदयं नकुलद्वेषी सुकुलद्वेषी पुनः पिशुनः ॥११॥
दानं प्रियवाक्सहितं ज्ञानमगर्वं क्षमान्वितं शौर्यम् ।
वित्तं त्यागसमेतं दुर्लभमेतच्चतुर्विधं भद्रम् ॥१२॥
दन्ता विश्लथदन्ताः[1] केशाः काशप्रसूनसंकाशाः ।
नयनं [2]तमसामयनं तथापि चित्तं धनाङ्गनायुक्तम् ॥१३॥
अहमेव गुरुः सुदारुणानामिति हालाहल मा स्म तात दृप्यः ।
ननु सन्ति भवादृशानि भूयो भुवनेऽस्मिन् वचनानि दुर्जनानाम् १४
विधिरेव विशेषगर्हणीयः करट त्वं रट कस्तवापराधः ।
सहकारतरौ चकार यस्ते सहवासं सरलेन कोकिलेन ॥१५॥
अद्यापि दुर्निवारं स्तुतिकन्या वहति कौमारम् ।
सद्भ्यो न रोचते साऽसन्तोप्यस्यै न रोचन्ते ॥१६॥
वाङ्माधुर्यान्नान्यदस्ति प्रियत्वं, वाक्पारुष्याच्चापकारोऽपि नान्यः
किं तद् द्रव्यं कोकिलेनोपनीतं, को वा लोके गर्दभस्यापराधः ।१७।
[3]परिचरितव्याः सन्तो यद्यपि कथयन्ति नो सदुपदेशम् ।
यास्त्वेषां स्वैरकथास्ता एव भवन्ति शास्त्राणि ॥१८॥
ज्वलति चलितेन्धनोऽग्निर्विप्रकृतः पन्नगः फणां कुरुते ।
प्रायः स्वं महिमानं क्रोधात् प्रतिपद्यते लोकः ॥१९॥

---

१ विश्लथन् अन्तः येषां ते, २ नेत्ररोगाणाम्, ३ सेवितव्याः.

याचना हि पुरुषस्य महत्वं नाशयत्यखिलमेव तथा हि ।
सद्य एव भगवानपि विष्णुः वामनो भवति याचितुमिच्छन् ।२०।
वपुःप्रादुर्भावादनुमितमिदं जन्मनि पुरा
पुरारे न क्वापि क्वचिदपि भवन्तं प्रणतवान् ।
नमन्मुक्तः सम्प्रत्यहमतनुरग्रेऽप्यनतिमान्
इतीश क्षन्तव्यं तदिदमपराधद्वयमपि ॥२१॥
अमीषां प्राणानां तुलितबिसिनीपत्रपयसां
कृते किं नास्माभिर्विगलितविवेकैर्व्यवसितम् ?
यदाढ्यानामग्रे द्रविणमदनिःसंज्ञमनसां
कृतं वीतव्रीडैर्निजगुणकथापातकमपि ॥२२॥
क्वचिद्विद्वद्गोष्ठी क्वचिदपि सुरामत्तकलहः
क्वचिद्वीणावादः क्वचिदपि च हा हेति रुदितम् ।
क्वचिद्रम्या रामा क्वचिदपि जराजर्जरतनुः
न जाने संसारः किममृतमयः किं विषमयः ॥२३॥
गुणायन्ते दोषाः सुजनवदने दुर्जनमुखे
गुणा दोषायन्ते, तदिदमपि नो विस्मयपदम् ।
महामेघः क्षारं पिबति कुरुते वारि मधुरं,
फणी क्षीरं पीत्वा वमति गरलं दुःसहतरम् ॥२४॥
कुमुदवनमपश्रि श्रीमदम्भोजखण्डं,
त्यजति मुदमुलूकः प्रीतिमांश्चक्रवाकः ।
उदयमहिमरोचिर्याति शीतांशुरस्तं,
हतविधिलसितानां हन्त चित्रो विपाकः ॥२५॥
वयमिह परितुष्टा वल्कलैस्त्वं दुकूलैः
सम इह परितोषो, निर्विशेषो विशेषः ।
स तु भवति दरिद्रो यस्य तृष्णा विशाला

मनसि च परितुष्टे कोऽर्थवान् को दरिद्रः ॥२६॥

चाञ्चल्यमुच्चैःश्रवसस्तुरङ्गात्
कौटिल्यमिन्दोर्विषतो विमोहः ।
इति श्रियाशिक्षि सहोदरेभ्यो,
न वेद्मि कस्माद् गुणवद्विरोधः ॥२७॥

नन्वाश्रयस्थितिरियं तव कालकूट
केनोत्तरोत्तरविशिष्टपदोपदिष्टा ।
प्रागर्णवस्य हृदये वृषलक्ष्मणोऽथ
कण्ठेऽधुना वससि वाचि पुनः खलानाम् ॥२८॥

धनैर्निष्कुलीनाः कुलीना भवन्ति,
धनैरापदं मानवा निस्तरन्ति ।
धनेभ्यः परो बान्धवो नास्ति लोके,
धनान्यर्जयध्वं, धनान्यर्जयध्वम् ॥२९॥

वितरति गुरुः प्राज्ञे विद्यां यथैव तथा जडे,
न तु खलु तयोर्ज्ञाने शक्ति करोत्यपहन्ति वा ।
भवति हि पुनर्भूयान् भेदः फलं प्रति तद्यथा,
प्रभवति शुचिर्बिम्बग्राहे मणिर्न मृदां चयः ॥३०॥

ये नाम केचिदिह नः प्रथयन्त्यवज्ञां
जानन्ति ते किमपि, तान् प्रति नैष यत्नः ।
उत्पत्स्यते हि मम कोऽपि समानधर्मा
कालो ह्ययं निरवधिर्विपुला च पृथ्वी ॥३१॥

पादाहतोऽथ दृढदण्डविघट्टितो वा
यं दंष्ट्रया दशति तं किल हन्ति सर्पः ।
कोऽप्यन्य एव पिशुनोऽद्य भुजङ्गधर्मा
कर्णे परं स्पृशति हन्त्यपरं समूलम् ॥३२॥

असितगिरिसमं स्यात् कज्जलं सिन्धुपात्रे
सुरतरुवरशाखा लेखनी पत्रमुर्वी ।
लिखति यदि गृहीत्वा शारदा सार्वकालं
तदपि तव गुणानामीश पारं न याति ॥३३॥
मानुष्यं वरवंशजन्म विभवो दीर्घायुरारोग्यकं,
सन्मित्रं सुसुतः सती प्रियतमा भक्तिश्च नारायणे ।
विद्वत्वं सुजनत्वमिन्द्रियजयः सत्पात्रदाने रतिः
ते पुण्येन विना त्रयोदश गुणाः संसारिणां दुर्लभाः ॥३४॥
सानन्दं सदनं सुताश्च सुधियः कान्ता न दुर्भाषिणी,
सन्मित्रं सुधनं स्वयोषिति रतिश्चाज्ञापराः सेवकाः ।
आतिथ्यं शिवपूजनं प्रतिदिनं मृष्टान्नपानं गृहे
साधोः संगमुपासते हि सततं धन्यो गृहस्थाश्रमः ॥३५॥
क्रोशन्तः शिशवः सवारि सदनं पङ्कावृतं चाङ्गणं,
शय्या दंशवती च रुक्षमशनं धूमेन पूर्णं गृहम् ।
भार्या निष्ठुरभाषिणी प्रभुरपि क्रोधेन पूर्णः सदा,
स्नानं शीतलवारिणा हि सततं धिक् धिक् गृहस्थाश्रमम् ॥३६॥
आयुर्वर्षशतं नृणां परिमितं रात्रौ तदर्धं गतं,
तस्यार्धस्य परस्य चार्धमपरं बालत्ववृद्धत्वयोः ।
शेषं व्याधिवियोगदुःखसहितं सेवादिभिर्नीयते,
जीवे वारितरङ्गचञ्चलतरे सौख्यं कुतः प्राणिनाम् ॥३७॥
विद्वान् संसदि पाक्षिकः, परवशो मानी, दरिद्रो गृही,
वित्ताढ्यः कृपणः, सुखी परवशो, वृद्धो न तीर्थाश्रितः ।
राजा दुःसचिवप्रियः, कुलभवो मूर्खः, पुमान् स्त्रीजितो,
वेदान्ती रहितक्रियः, किमपरं हास्यास्पदं भूतले ॥३८॥
लोभश्चेदगुणेन किं, पिशुनता यद्यस्ति किं पातकैः,

सत्यं चेत्तपसा च किं, शुचि मनो यद्यस्ति तीर्थेन किम् ।
सौजन्यं यदि किं जनैः, सुमहिमा यद्यस्ति किं मण्डनैः,
सद्विद्या यदि किं धनैरपयशो यद्यस्ति किं मृत्युना ॥३९॥
अङ्कं केऽपि शशङ्किरे जलनिधेः पङ्कं परे मेनिरे
सारङ्गं कतिचिच्च संजगदिरे भूच्छायमैच्छन् परे ।
इन्दौ यद्दलितेन्द्रनीलशकलश्यामं दरीदृश्यते
तत्सान्द्रं निशि पीतमन्धतमसं कुक्षिस्थमाचक्ष्महे ॥४०॥
दौर्गत्येन समीरिता हृदयतः कण्ठं समालम्बते
कण्ठात् कष्टतरं कथं कथमपि प्राप्नोति जिह्वाञ्चलम् ।
लज्जाकीलककीलितेव निबिडं तस्मान्न निर्यात्यहो,
वाचा प्राणपरिक्षयेऽपि महतां देहीति नास्तीति च ॥४१॥
त्वं राजा वयमप्युपासितगुरुप्रज्ञाभिमानोन्नताः,
ख्यातस्त्वं विभवैर्यशांसि कवयो दिक्षु प्रतन्वन्ति नः ।
इत्थं मानद नातिदूरमुभयोरप्यावयोरन्तरं,
यद्यस्मासु पराङ्मुखोऽसि वयमप्येकान्ततो निःस्पृहाः ॥४२॥
काकुत्स्थस्य दशाननो न कृतवान् दारापहारं यदि,
क्वाम्भोधिः क्व च सेतुबन्धघटना क्वोत्तीर्य लङ्काजयः ।
पार्थस्यापि पराभवं यदि रिपुर्नाधात् क्व तादृक् तपो,
नीयन्ते रिपुभिः समुन्नतिपदं प्रायः परं मानिनः ॥४३॥
नो सन्ध्या समुपास्यते यदि तदा लोकापवादाद्भयं
सा चेत् स्वीक्रियते भविष्यति तदा राजन्यबीजे नतिः ।
इत्थं चिन्तयतश्चिरं भृगुपतेर्निश्वासकोष्णीकृतो
नेत्रान्तःप्रतिबिम्बशोणसलिलः सन्ध्याञ्जलिर्वेपते ॥४४॥
कान्तं वक्ति कपोतिकाकुलतया नाथान्तकालोऽधुना,
व्याधोऽधो धृतचापसज्जितशरः श्येनः परिभ्राम्यति ।

इत्थं सत्यहिना स दष्ट इषुणा श्येनोऽपि तेनाहतः,
तूर्णं तौ तु यमालयं प्रति गतौ दैवी विचित्रा गतिः ॥४५॥
यस्याश्चोरश्चिकुरनिकरः, कर्णपूरो मयूरो,
भासो हासः, कविकुलगुरुः कालिदासो विलासः ।
हर्षो हर्षो, हृदयवसतिः पञ्चबाणस्तु बाणः,
केषां नैषा कथय कविताकामिनी कौतुकाय ॥४६॥
माघश्चोरो मयूरो मुररिपुरपरो भारविः सारविद्यः
श्रीहर्षः कालिदासः कविरथ भवभूत्याह्वयो भोजराजः ।
श्रीदण्डी डिण्डिमाख्यः श्रुतिमुकुटगुरुर्भल्लटो भट्टबाणः
ख्याताश्चान्ये सुबन्ध्वादय इह कृतिभिर्विश्वमाह्लादयन्ति ।४७।
येषां श्रीमद्यशोदासुतपदकमले नास्ति भक्तिर्नराणां,
येषामाभीरकन्याप्रियगुणकथने नानुरक्ता रसज्ञा ।
येषां श्रीकृष्णलीलाललितगुणरसे नानुरक्तौ च कर्णौ,
धिक् तान्, धिक् तान्, धिगेतान् कथयति सततं कीर्तनस्थो
मृदङ्गः ॥४८॥
या पाणिग्रहलालिता सुसरला तन्वी सुवंशोद्भवा,
गौरी स्पर्शसुखावहा गुणवती नित्यं मनोहारिणी ।
सा केनापि हृता, तया विरहितो गन्तुं न शक्तोऽस्म्यहं,
रे भिक्षो तव कामिनी ? नहि नहि प्राणप्रिया यष्टिका ॥४९॥
विद्वांसो यदि मम दोषमुद्गिरेयुः, यद्वा ते गुणगणमेव कीर्तयेयुः ।
युक्तं तत् बहु मनुते मनो मदीयं, कष्टं तत् बत मनुते यदाह मन्दः ५०

प्रश्नाः— १ सरस्वत्याः मन्दहासः कस्मै प्रभवेत्, कुतः च ? २ सन्तः कस्मात् सेव्याः ? ३ हालाहलं कस्मात् मा दृप्यत् ? ४ पिशुनसर्पयोः को विशेषः ? ५ भूतले किं किम् उपहासार्हम् ? ६ मन्दविदुषोः गुणदोष–कथने कवेः कोऽभिप्रायः ?

# १० रामस्य वनगमनम्

**परिचयः**— कविकुलोपजीव्यो वदान्यो भोजराजः कालिदाससमकालीन इति श्रूयते। स चम्पूरामायणं नाम काव्यं रचयामास। 'गद्यपद्यात्मकं काव्यं चम्पूरित्यभिधीयते' इति लक्षणेनैव चम्पूशब्दार्थो ज्ञायते। इदं काव्यं वस्तुतः कालिदासेन विरचितमपि भोजराजनाम्ना प्रसिद्धीकृतमिति केचित् वदन्ति। यः कोऽपि वा भवतु कर्ताऽस्य ग्रन्थस्य, किन्तु अर्थगाम्भीर्यप्रसादगुणशालित्वोदात्तरचनादिविषयेषु सर्वथैवैतत्काव्यं सहृदयानन्दकरं वर्तते। तत्रायोध्याकाण्डस्थोऽयं भागः।

दशरथप्रतिश्रुतं वरद्वयं याचमाना कैकेयी रामवनवासस्य कारणं बभूवेति शोकाकुलो दशरथोऽन्तकातिथिर्जातः। भरतस्तु सर्वमेतं वृत्तान्तं विदित्वा मातरं निर्भर्त्स्य रामं वनवासात् निवर्तयितुं प्रयतते। किन्तु श्रीरामः तं सान्त्वयित्वा पितुराज्ञापालनपरो वनं व्रजत्येव।

अस्मिन् प्रसङ्गे वार्धक्ये स्थितेन दशरथेन पुत्रवियोगमसहमानेन प्रार्थिताऽपि कैकेयी स्वकीयं हठं न मुमोच। सत्यसन्धाः पूर्वतना राजानः प्रतिज्ञापालनार्थं प्राणानपि त्यक्तुं समर्थाः किं पुनः सुतदारराजवैभवादिकम्? इति अत्रत्यो दशरथवृत्तान्त एव सूचयति। तथा च रामोऽपि पूर्वस्मिन्नेव दिने यौवराज्याभिषेकवृत्तान्तं परदिने च स्ववनवासप्रसङ्गं श्रुत्वाऽप्यविचलितमानसः पितृवचनपालनार्थं वनं जगाम। प्रमदा दुरभिनिवेशग्रस्ता विषप्राशनेनात्मघातपर्यन्तमपि प्रवर्तन्ते इति कैकेयीवृत्तान्ततो ज्ञायते।

अत्र च सन्दर्भे कौतुक, उपयम, आश्रुत इत्यादिषु शब्दार्थश्लेषाः, जललिपिः पूर्णपात्रम् इत्यादयः नवीनाः कल्पनाः, तथैव 'त्वच्चेतसोऽपि कठिनानि शिलातलानि, मयि पतति गरीयानम्ब ते पक्षपातः, वीरुच्छन्ना चन्द्रकान्तस्थलीव,' इत्यादयः वर्णनाप्रकाराः कस्य सहृदयस्य हृदयं नाकर्षन्ति?

सैषा मन्थराभिधानपिशाचिकावेशपरवशनिजाशया पूर्वं दण्डके वैजयन्तपुरवास्तव्यशम्बरासुरसंगरसंगतवेदनापनोदनार्थमात्मने वितीर्णं वराय दशरथाय वरद्वयं न्यवेशयत् ।

तयोरेकस्य [1]संरम्भो भरतस्याभिषेचनम् ।
अन्यस्य वन्यवृत्त्यैव वने रामस्य वर्तनम् ।। १ ।।

तनयविरहवार्तामात्रसन्तप्यमाना—
दथ दशरथचित्ताच्चेतना निर्जगाम ।
दवहुतवहरोचिर्ज्वालया लेह्यमाना,
झटिति गहनगुल्मादुज्जिहाना[2] मृगीव ।।२।।

अथ दशरथः कथमपि लब्धसंज्ञः कैकेयीमभाषत —

रामः काममुपाश्रयिष्यति वनं त्यक्त्वा धृतं [3]कौतुकम्,
लोकस्त्यक्ष्यति कौतुकं[4] चिरधृतं तस्याभिषेके कथम् ? ।
धर्मापायभयेन वत्सविरहं वक्ष्यामि वक्ष्यामि किम्,
यावत्कल्पमकीर्तिरार्तिजननी[5] जायेत जाये तव ।।३।।

वत्सं कठोरहृदये नयनाभिरामं,
रामं विना न खलु तिष्ठति जीवितं मे ।
धातुर्बलादुपयम[6]स्त्वयि जातपूर्वः,
कैकेयि मामुपयमं[7] नयतीति मन्ये ।।४।।

तदनु निजमनोरथैकपरिपूरणे कृतादरा कैकेयी सोपहासमवादीत्—

[8]सत्यविप्लवमपत्यसङ्गतः संगतं भृशमपश्यतस्तव,
[9]आश्रुतस्य विफलत्वमस्ति चेदाः [10]श्रुतस्य रचितोऽयमञ्जलिः ५

---

१ परिणामः फलम् इतितात्पर्यम्, २ अभ्युत्पतन्ती, ३ माङ्गलिकं हस्तसूत्रम्, ४ आनन्दम्, ५ पीडाकरी, ६ विवाहः, ७ यमसमीपम्, ८ सत्यभ्रंशम्, ९ प्रतिज्ञातस्य, १० सत्यं वद इत्यादिधर्मस्य.

किं नागतस्ते [1]श्रवसोः सकाशमरिन्दमः सत्यगिरां पुरोगः ।
श्येनामिषीभूतकपोतपोतजीवातवे[2] शस्त्रनिकृत्तगात्रः ॥६॥

असुरसमरवेलाजातबाधावसाने,
वरयुगमदिशस्त्वं प्रीतिपूर्वं यया मे ।
अशिथिलगुणबन्धाः सत्यसन्धा नरेन्द्रा
जललिपिरिति कामं संगिरन्तां गिरं ताम् ॥७॥

सत्योद्यां[3] गिरमिह निर्वहस्व मा वा,
सन्मानं भुवि न सहेय राममातुः ।
संस्थास्ये[4] विषमुपभुज्य पश्यतस्ते,
संनाहं[5] त्यजसि न चेत्प्रवर्तमानम् ॥८॥

एवंवादिनीमेनां भूयोऽपि भूपतिरवदत्—अयि कठिनहृदये,
किमुन्मुक्तलोकमर्यादया दयापेतया त्वयोत ?

नैवाभवस्त्वमिह शीलवतीषु गण्या,
नैवाभजत्पितृमतां गणनां स रामः ।
नैवापसात्मजसुखान्यहमप्यनार्ये,
[6]नैवापमम्बु भरतेन न मे प्रदेयम् ॥९॥

वासस्त्वचां भवतु किंचन [7]तारवीणां,
छायाद्रुमाश्च भवनानि भवन्तु धन्याः ।
कैकेयि, तस्य शयनानि कथं भवेयुः,
त्वच्चेतसोऽपि कठिनानि शिलातलानि ॥१०॥

एवं भर्त्रा भर्त्सिताऽप्यार्द्रचित्ता,
नाभूदेषा मन्थराक्रान्तवृत्तिः ।

---

१ कर्णयोः, २ जीवातुर्जीवनौषधम्, ३ सत्योक्तिम्, ४ मरिष्ये, ५ उद्योगम्, ६ पितृदानं निवापः स्यात्, तत्संबन्धि नैवापम्, ७ तरुसम्बन्धिनीनाम्.

[1]राकाचन्द्रे राजमानेऽप्यबाधं,
　　वीरुच्छन्ना चन्द्रकान्तस्थलीव ॥११॥

तदनु मुहूर्तमपि राममुखावलोकनसुखमनुबुभूषुर्दशरथः कुमारमानयेति सुमन्त्रमादिदेश। तेन सत्वरं राजभवनं प्रवेशितो रामः कृतप्रणामः पितरमयथाभूतमुखविकासमारादालक्ष्य चकितः किमिदमिति कैकेयीमन्वयुङ्क्त। साऽपि पापाशया प्रत्यवादीत्—

'वत्स प्रतिश्रुतवरद्वयनिर्वहणे [2]निपुणेतरस्तातस्ते सम्प्रति सानुशयस्तनयवात्सल्यात् सत्यव्यत्यासत्रासाच्च गाढमगाधे शोकसागरे निमज्जतीति। वरद्वयं तावत् तव मुनिवृत्त्यैव वने वर्तनमवनेरवनं भरतस्येति'।

रामस्तदाकर्ण्य प्रमुदितहृदयः कृताञ्जलिरेनां प्रति व्यजिज्ञपत्-

भीतो भूभरतः किमम्ब भरतः किं वा वनात्पावनात्,
　　त्रस्तोऽहं [3]सगरान्ववायककुदस्तातः कुतः शोचति।
दिव्यायाः सरितो निवापकरणादल्पां प्रतिज्ञामिमाम्,
　　आवाभ्यामभिपूरयिष्यति न चेत्पुत्री कथं स्यादयम् ॥१२॥

वनभुवि तनुमात्रत्राणमाज्ञापितं मे,
　　सकलभुवनभारः स्थापितो वत्समूर्ध्नि।
तदिह सुकरतायामावयोस्तर्कितायां,
　　मयि पतति गरीयानम्ब ते [4]पक्षपातः ॥१३॥

तातः स्ववाचा व्यवहृत्य हृद्यं वत्साभिषेकोत्सवमङ्गलं मे।
　　प्रणामसंज्ञस्य मयार्पितस्य किं [5]पूर्णपात्रस्य न पात्रमासीत् १४

---

१ पूर्णे राका निशाकरे, २ असमर्थः, ३ सगरवंशीयेषु क्षत्रियेषु श्रेष्ठः, ४ वात्सल्यातिशयः, ५ उत्सवादिषु यद्देयं पूर्णपात्रं तदुच्यते.

तत्क्षणमशनिहत इव पर्वतः सर्वतः परीतदवदहन इव वनस्पति-र्दिवस्पतिपदभ्रंशविधुर इव नहुषः पपात निःसंज्ञः [1]पङक्तिरथः। ततः सा पितृनिदेशमाचरेति राममादिदेश। स एषः —

मातुराज्ञां वहन्मूर्ध्ना मालामिव महायशाः।
वनाय रामो वव्राज जगतामवनाय[2] च ॥१५॥

**प्रश्नाः**— (१) रामे पुत्राधिकवात्सल्यवती कैकेयी वरप्रार्थनाववसरे कथं तद्वनवासं याचते? (२) सत्यसन्धोऽपि दशरथः कैकेयीप्रार्थितवरदाने कुतो विचलितमना भवति? (३) राममातुः सन्मानमसहमाना कैकेयी कथमाक्रोशति कथं च प्रकटयति मानसीं क्षुद्रताम्? (४) भरतस्य राज्यलाभः, स्वस्य च वनवास इति श्रुत्वापि रामस्य मनसः का स्थितिः? (५) कैकेय्याः कस्मिन् पक्षपातः? रामे वा भरते वा?

---

# ११ किरातार्जुनौ

**परिचयः**— गद्यमिश्रपद्यात्मकेषु चम्पूकाव्येषु रामायणचम्पूतो भारत-चम्पूरतीव प्रौढेति साहित्यविदां मर्यादा। यदन्तरं कालिदासकाव्य-भारविकाव्ययोः तावदेवान्तरं रामायणचम्पूभारतचम्प्वोरपि। एतावता-ल्पेनापि विवेचनेनैतस्य भारतचम्पूग्रन्थस्य महत्त्वं वर्णितं भवति। सोऽयं

---

१ दशरथः, २ रक्षणाय;

ग्रन्थो वाग्देवतायाः सरस्वत्याः साक्षात् प्राणेभ्योऽपि प्रियतर इति ग्रन्थान्ते ग्रन्थकारोऽनन्तभट्टनामा कविः यत् स्वयं कथयति 'दिगन्तरलुठत्कीर्तिरनन्त-कविकुञ्जरः । प्राणैस्तुल्यं सरस्वत्याः प्राणैश्रीचम्पुभारतम्' इत्यादिना तत् तदीयकाव्यानुभवोत्तरं यत्सत्यं सर्वथैव यथार्थमवभासते । तदीय-चम्पूग्रन्थाच्चतुर्थस्तबकादुद्धृतोऽयं भागः । एतस्य सन्दर्भस्तु — इन्द्रकीलपर्वते तपश्चरतोऽर्जुनस्याश्रमसमीप आगतं कश्चित् वनवराहम्, अर्जुनं परीक्षितुकामः किरातरूपधारी शङ्करः अर्जुनश्च बाणाभ्यां युगपदेव विविधतुः । तन्निमित्तेन कलहायमानयोरर्जुनकिरातयोर्द्वन्द्वयुद्धं प्रववृते । तदाऽर्जुनस्य बाहुपराक्रमेण निरतिशयशिवभक्त्या च प्रसन्नो धूर्जटिस्तं वरप्रदानेनानुजग्राहेति ।

अस्य कवेः सरस्वतीप्रसादलब्धा काव्यकल्पनाशक्तिः स्फूर्तिशालिनी प्रतिभा च स्थाने स्थानेऽनुभवगोचरीभवति— 'ताटङ्कमेव सहसे न कपोल-मित्रम्, मनसा या त इषुः श्रुतिं जजाप' इत्यादौ । काव्यनिर्माणप्रसङ्गे वैदिकमन्त्राणां तदर्थस्य चानुसन्धानं नामातीव दुर्लभो विषयः यतो वैदिकी भाषा लौकिक्या भाषाया बहुशो विभिद्यते । अयं तु कविरुभयोरपि भाषयोः प्रवीण इति शङ्करकथायां प्रस्तुतायां शङ्करप्रिययजुर्वेदीयरुद्रा-ध्यायगतस्य 'या त इषुः शिवतमा शिवं बभूव ते धनुः । शिवा शरव्या या तव तया नो रुद्र मृडय' इति मन्त्रस्य प्रतीकोद्धरणेन सुस्पष्टं प्रतीयते । अथ च किरातरूपं परित्यज्य स्वस्वरूपेण प्रकटीभूतस्य शङ्करस्यार्जुनकृत-साक्षात्कारवर्णनं विविधरसभावादिचर्वणाजन्यमानन्दमास्वादयति । अत एव सोऽयं गद्यभागः शिवस्तुतिपरः पाठकैर्मुखगतः करणीय इत्यास्तां तावत् ।

**क्षोदयन्नथ महीं खुरपातैः कोऽपि कोपकुटिलो [1]वनकोलः ।**
**घोरघूत्करणघोणमुपागात्[2], कुक्षिमाश्रमभुवः कुरुसूनोः ॥ १ ॥**

---

१ 'वराहः सूकरो घृष्टिः कोलः', २ 'घोणा नासा च नासिका',

तं रौद्रवपुषं वराहं वीक्ष्य पार्थो नियमान्निवृत्य करेण शरासनमादाय यदा जिघांसुर्जवादभिदुद्राव तावदेवैतेन धनुराकृष्य तमेवाभिधावन् शबरो ददृशे।

मा मुञ्च बाणं मदनुद्रुतेऽस्मिन्,
अपेहि जाल्मेति किरातनेतुः।
वचः स लक्ष्यं मनसो न कुर्वन्,
वराहमस्त्रस्य चकार लक्ष्यम् ॥ २ ॥

ततश्चोभाभ्यामपि युगपत्प्रयुक्तावुभौ शिलीमुखौ घोरं तं वराहमन्तकातिथिमकुरुताम्। 'इत्थं मदाश्रममागतं मया च प्राग् लक्ष्यीकृतं सूकरमेतं प्रहरन्तं मदीयशापदण्डयोग्यमपि भवन्तं दयया सहे' इति ब्रुवन्तमर्जुनं किरातः सस्मितमवादीत्—

मृदुबुद्धिरङ्ग वचसैव लक्ष्यसे, मृगहिंसनं विपिनसीमनीदृशम्।
शतशः स्वधर्म इति पठ्यते बुधैः शबरस्य वा वद तपोधनस्य वा ॥३॥

अर्जुनः —

यस्माद्वनेचरकुलाधम जल्पसि त्वम्,
एवं मनः पुलकयन् स्वजनस्य दृप्तः।
तस्मादसंशयमुपान्तजुषः[1] किरात्याः,
[2]ताटङ्कमेव सहसे न कपोलमित्रम् ॥ ४ ॥

अथ भिल्लमल्लकुरुवल्लभावुभौ,
[3]परिफुल्लभल्लकुलशल्यपल्लवैः।
स्थगितावलोकसरणिं दिवौकसां,
समरं भयङ्करजवं वितेनतुः ॥ ५ ॥

---

१ समीपवर्तिन्याः, २ कर्णभूषणं, ३ भल्लः बाणविशेषः.

सरुषीव हरे विकृष्टचापे सशरं शैलसुतापि जातशङ्का ।
मघवत्सुतमङ्गलाय देवी मनसा ‘ या त इषुः ’ श्रुतिं जजाप ॥६॥

[1]निःस्वे निषङ्गयुगले नितराममर्षी,
चापेन मूर्ध्नि गिरिशं पुर एव देव्याः ।
पार्ष्णिप्रमुक्तधरणिः प्रजहार वेगात्,
कुर्वन् व्रणं स कुटिलं शशिखण्डमित्रम् ॥ ७ ॥

सोऽयं गाण्डीवदण्डोऽपि तस्य जटावनकुटुम्बिभिः [2]कुण्डलिभिर्भक्षित इव तत्क्षणं नालक्ष्यत । ततोऽयं दैवविपर्ययः किम् ? उतामुष्य माया किम् ? इति चिन्तापरतन्त्रेणाऽपि धैर्यदत्तहस्तोत्साहेन ‘ तिष्ठ तिष्ठ जडात्मन् एवमर्जुनं निर्जित्य यशोऽर्जितुमिच्छसि ’ इति कृततर्जनेन सितवाहनेन वृषवाहनं प्रति नियोद्धुमारेभे । तदनु च परस्परमुष्टिप्रहारवृष्टिपरिमृष्टवनकुसुमपरागभस्माङ्गरागौ सरभसमेकेन बाहुना जटासु गृहीत्वापरेण बाहुना वलयितगलनालौ तौ शबरतपोधनौ क्रमेण हिमवतो महत्यामधित्यकाया[3]मापतताम् ।

पार्थस्य तस्य भुजयोः परमेश्वरोऽसौ,
वीर्यं विलोक्य युधि विस्मयमानचेताः ।
चापव्रणे सुरनदीकणसेकशङ्काम्
अप्युत्सृजन्मुहुरकम्पयदुत्तमाङ्गम् ॥ ८ ॥

पार्थस्तु परुषतरपशुपतिप्रयुक्तमुष्टिप्रहारमूर्च्छितोऽप्यचिरादेव लब्धचेतनः शनैरुत्थाय पुरतो घण्टाघणघणात्कारसहचरेण कण्ठगर्जितेन कर्णयोः कल्पितसुधारसमोक्षे महोक्षे निषेदिवांसं, भुजमूलप्रसारितगिरिजापाणियुगलनखराङ्कुरधोरणीद्विगुणीकृतहारमणिरमणीयवक्षसं, पारिषदगणाञ्जलिकमलवनमध्यराजहंसायमानं,

---

१ बाणरूपधनरहिते, २ सर्पैः, ३ पर्वतस्योपरितनभूम्याम्.

मार्दवभरितशार्दूलचर्मनिर्मितपल्ययन[1]पर्यङ्कोपरिभागतिर्यगर्पित-चरणपल्लवसंवाहनपरेण [2]शिलादकुमारेण च दर्पपुर्ल्ललननिवारणाय मुखबन्धनकनकशृङ्खलेन निरुध्य मुहुर्मुहुः करपुटास्फालितककुद-शृङ्गेण भृङ्गिणा[3] च लक्ष्यमाणोभयपक्षभागं, गाण्डीवदण्डताडन-परिपीडितचूडाशशिनमाश्वासयितुमवतरद्भिरु[4]डुनिकरैरिव सुरतरु-कुसुमवर्षैरवकीर्यमाणं, जटाभस्मकुशचीरधारिभिस्तैरेव चतुर्भि-राम्नायपुरुषैः परिपाठ्यमानशतरुद्रीय[5]बिरुदप्रबन्धम्, अम्बरे [6]सविधमवलम्बमानैस्तुम्बुरुप्रभृतिभिः सुरवैणिकैरुपवीण्यमानभक्त-जनरक्षणापदानप्रकरणं[7], कर्णपूरीकृततमालमञ्जरीमधुमिषेण कटा-क्षात्साक्षात्कृपामिव वर्षन्तं, प्रज्वलद्भिः परिष्कारपन्नगफणा-रत्नैर्नूत्नैः शरव्रणैरिवानुरज्यमानावयवम्, अवतंसशशिकलापरि-गलितकिरणधारापातशीतासहिष्णुतयेव दन्तपटगर्भवर्तिना स्मितेन सूचितहृदयप्रसादं, भगवन्तं महादेवमुद्वीक्ष्य पक्ष्मतटरुहविट-पिसमुत्पाटनपटुभिः प्रमोदाश्रुपूरैर्नदीमातृकायमाणपुलकाङ्कुरः सवि-नयमुपसृत्य पादारविन्दयोः सहस्रकृत्वः प्राणंसीत्।

स्वामिन् मया जडधिया त्वयि देवदेवे,
वाचा शरेण धनुषा दृढमुष्टिना च।
यत्ते चतुर्विधमकारि रणे तदागः,
क्षन्तव्यमद्य भवता करुणार्णवेन ॥ ९ ॥

इति विज्ञापयन्तमेनं पारिजातपल्लव[8]तल्लजप्रतिमल्लस्य[9] पाणि-तलस्य परामर्शनेन प्रमुषितव्रणवेदनाङ्गं [10]प्लवङ्गकेतनमनङ्ग-शासनोऽप्येवमवादीत्।

---

१ पल्ययनं वाहनपृष्ठास्तरणम्, २ नन्दिकेश्वरेण, ३ सेवकविशेषेण, ४ तारकाण्युडु वा स्त्रियाम्, ५ कृष्णयजुर्वेदान्तर्गतः रुद्राध्यायः, ६ समीपम्, ७ अपदानं पुण्यकर्म, ८ तल्लजः प्रशस्तः, ९ सदृशस्य, १० अर्जुनम्.

यथा तृतीयेन युधि प्रवीर,
तवापराधेन भवामि तुष्टः ।
तथा न भक्त्या तपसां विभूत्या,
तरुप्रसूनार्चनया च बह्व्या ॥ १० ॥
तत्क्षणाद्धनुरिषूनपि तांस्तान्
संनिधाप्य विभुरस्त्रमपि स्वम् ।
पाण्डवाय धनुराहृतिरीतेः
पारितोषिकमिव प्रदिदेश ॥ ११ ॥

प्रश्नाः—(१) अर्जुनस्याल्पबुद्धित्वं मृगयाधर्मानभिज्ञत्वं च किरातेन कथं प्रकटीकृतम् ? (२) अर्जुनेन किरातविषये कृतश्चतुर्विधोऽपराधः कः ? (३) सन्दर्भपुरःसरं स्पष्टीकुरुत—'तवापराधेन भवामि तुष्टः'। 'प्लवङ्गकेतनमनङ्गशासनोऽप्येवमवादीत्'। 'मनसा या त इषुः श्रुतिं जजाप'।

---

## १२ शुनःशेपकथा

परिचयः—'मन्त्रब्राह्मणयोर्वेदनामधेयम्' इति स्मृतिकारवचनानुसारेण प्रतिवेदं मन्त्रात्मको ब्राह्मणात्मकश्च भागो वर्तते । आरण्यकम् उपनिषदश्चेति भागद्वयमपि ब्राह्मणान्तर्गतमेवेति न पूर्वोक्तस्मृतिवचनविरोधः । मन्त्रात्मक एव वेद इति वदन्तः केचन विद्वांसस्तु स्वोक्तौ किं मूलमवलम्बन्ते इति त एव प्रष्टव्याः । ऐतरेयब्राह्मणं हि ऋग्वेदीयं ब्राह्मणम् ।

इतरवेदवदस्यापि जगत्सृष्टिकाल आविर्भूतत्वं वेदशास्त्रपरम्परायां प्रसिद्धम्। ऐतिहासिकास्तु क्रिस्तपूर्वसार्धद्विसहस्रवर्षेभ्य आरभ्य सार्धैकसहस्रवर्षपर्यन्तं ब्राह्मणनिर्माणकालमाहुः। कर्मणामुपासनानां ज्ञानस्य वा सार्थवादकं विधानं ब्राह्मणग्रन्थे भवति। तदुपयोगिमन्त्राम्नानं मन्त्रकाण्डे भवतीति सामान्यतः नियमः। अपवादस्तु वर्तते एव। इतराया अपत्यं पुमान् इति व्युत्पत्त्या इतरानाम्न्याः कस्याश्चन महर्षिपत्न्याः तनयेन महिदासनाम्ना रचितमेतद् ब्राह्मणमैतरेयब्राह्मणमित्युच्यते। अस्मिंश्च ब्राह्मणे प्राधान्येन ज्योतिष्टोमो राजसूयश्चेति क्रतुद्वयं प्रतिपाद्यते। तत्र राजसूयप्रतिपादकभागान्तर्गतोऽयं (३३ अध्याये १, २, ३ खण्डाः) परिच्छेदः।

एतस्मिन् परिच्छेदे इक्ष्वाकुकुलोत्पन्नो हरिश्चन्द्रो नाम अपुत्रो राजा पुत्रलाभोपयोगं नारदं पृच्छति। स च तदुपयोगं 'नापुत्रस्य लोकोऽस्ति' इति कथयित्वा वरुणाराधनेन पुत्रप्राप्तिर्भविष्यतीति ब्रवीति। अथ वरुण-प्रसादेन जातेऽपि पुत्रे स्वप्रतिज्ञामनुसृत्य पुत्रालम्भनेन वरुणयागमकुर्वन्तं तं वरुणो जलोदररूपेण पीडयामास। पुत्रस्तु रोहितः पलायनेनारण्यं प्राप्य षट्सप्तवर्षपर्यन्तं तत्रैव चरन् पितृ रोगवृत्तान्तं श्रुत्वा नगरमागन्तुकामोऽपि इन्द्रेण बहुवारं न्यवार्यत। पश्चाच्च तत्रैवाजीगर्तस्य नाम मुनेः शुनःशेपं नाम मध्यमपुत्रं क्रीत्वा यज्ञार्थं पितृसंनिधिमानीतवान् इति कथासन्दर्भः।

वरुणाराधनेन पुत्रलाभो भविष्यतीति प्रतिश्रुतस्य वरुणयागस्याकरणे जलोदरो भविष्यतीति च संकीर्तनेन तत्कालसमजाव्यवस्थायां देवतानुग्रहानु-वर्तित्वं प्रधानमासीदिति प्रतीयते। तथा इन्द्ररोहितसंवादेन ऐहिकानां पुरुषाणामामुष्मिकैः पुरुषैः सह दृढतरः सम्बन्ध आसीदित्यपि। तत्र पुत्र-विक्रयादयोऽपि तदात्वे प्रसिद्धा बभुवुः। सर्वथा यज्ञसंस्थायाः प्राधान्यं दरीदृश्यते।

हरिश्चन्द्रो ह वैधस ऐक्ष्वाको राजाऽपुत्र आस। तस्य ह शतं जाया बभूवुस्तासु पुत्रं न लेभे। तस्य पर्वतनारदौ गृह ऊषतुः। स ह नारदं पप्रच्छ।

यं न्विमं पुत्रमिच्छन्ति ये विजानन्ति ये च न।
किंस्वित्पुत्रेण विन्दते तन्म आचक्ष्व नारद ॥१॥ इति

स [1]एकया पृष्टो दशभिः प्रत्युवाच—

ऋणमस्मिन्संनयति[2] अमृतत्वं च गच्छति।
पिता पुत्रस्य जातस्य पश्येच्चेज्जीवतो मुखम् ॥२॥
यावन्तः पृथिव्यां भोगा यावन्तो जातवेदसि।
यावन्तो अप्सु प्राणिनां भूयान् पुत्रे पितुस्ततः ॥३॥

इति हास्मा आख्यायाथैनमुवाच, वरुणं राजानमुपधाव पुत्रो मे जायतां तेन त्वा यजा इति। तथेति स वरुणं राजानमुपससार। पुत्रो मे जायताम्, तेन त्वा यजा इति। तथेति। तस्य ह पुत्रो जज्ञे रोहितो नाम। तं होवाच। अजनि वै ते पुत्रो, यजस्व माऽनेनेति। स होवाच। यदा वै पशुर्निर्दशो भवति, अथ स मेध्यो भवति। निर्दशो न्वस्तु, अथ त्वा यजा इति। तथेति। स ह निर्दश आस। तं होवाच। निर्दशो[3] न्वभूद्यजस्व माऽनेनेति। स होवाच। यदा वै पशोर्दन्ता जायन्ते, अथ स मेध्यो[4] भवति। दन्ता न्वस्य जायन्तामथ त्वा यजा इति। तथेति। तस्य ह दन्ताः पेदिरे[5]। तं होवाच, अपत्सत वास्य दन्ताः, यजस्व माऽनेनेति। स होवाच। यदा वै पशोर्दन्ताः पुनर्जायन्ते अथ स मेध्यो भवति। दन्ता न्वस्य पुनर्जायन्तामथ त्वा यजा इति। तस्य ह दन्ताः पुनर्जज्ञिरे। तं

---

१ गाथया इति अध्याहारः, २ प्रापयति, ३ दशादिनादनन्तरम् ४ यज्ञार्हः ५ उदपद्यन्त.

होवाच । अज्ञत[1] वा अस्य पुनर्दन्ता यजस्व माऽनेनेति । स होवाच । यदा वै क्षत्रियः [2]सान्नाहुको भवति अथ स मेध्यो भवति। सन्नाहं नु प्राप्नोत्वथ त्वा यजा इति। तथेति । स ह सन्नाहं प्रापत् । तं होवाच । सन्नाहं नु प्राप्नोत्, यजस्व माऽनेनेति ।

स तथेत्युक्त्वा पुत्रमामन्त्रयामास । तात अयं वै मह्यं त्वामदात् । हन्त, त्वयाहमिमं यजा इति । स ह नेत्युक्त्वा धनुरादायारण्यमुपातस्थौ । स संवत्सरमरण्ये चचार। अथ हैक्ष्वाकं वरुणो जग्राह । तस्य होदरं[3] जज्ञे । तदु ह रोहितः शुश्राव । सोऽरण्यात् ग्राममेयाय । तमिन्द्रः पुरुषरूपेण पर्येत्योवाच —

नानाश्रान्ताय श्रीरस्तीति रोहित शुश्रुम ।

चरैवेति, चरैवेति वै मा ब्राह्मणोऽवोचदिति ह द्वितीयं संवत्सरमरण्ये चचार । सोऽरण्यात् ग्राममेयाय । तमिन्द्रः पुरुषरूपेण पर्येत्योवाच ' चरैव ' इति । इति ह तृतीयं संवत्सरमरण्ये चचार। सोऽरण्यात् ग्राममेयाय । तमिन्द्रः पुरुषरूपेण पर्येत्योवाच —

आस्ते भग आसीनस्य ऊर्ध्वस्तिष्ठति तिष्ठतः ।
शेते निपद्यमानस्य चराति चरतो भगः ॥४॥
चरन्वै मधु विन्दति चरन्स्वादुमुदुम्बरम् ।
सूर्यस्य पश्य [4]श्रेमाणं यो न तन्द्रयते चरन् ॥५॥

चरैवेति ।

एवं चतुर्थं पञ्चमं षष्ठं संवत्सरमरण्ये चचार ।

सोऽजीगर्तं सौयवसिमृषिमशनया[5] परीतमरण्य उपेयाय । तस्य ह त्रयः पुत्रा आसुः – शुनःपुच्छः, शुनःशेपः, शुनोलाङ्गूल इति ।

---

१ अजानिषत, २ धृतकवचः, ३ रोगविशेषः, ४ श्रेष्ठत्वम्, ५ बुभुक्षया.

तं होवाच । ऋषेऽहं ते शतं ददाम्यहमेतेनात्मानं निष्क्रीणा[१] इति । स ज्येष्ठं पुत्रं निगृह्णान उवाच । न न्विममिति । नो एवेममिति कनिष्ठं माता । तौ ह मध्यमे सम्पादयाञ्चक्रतुः शुनःशेपे । तस्य ह शतं दत्त्वा स तमादाय सोऽरण्यात् ग्राममेयाय । स पितरमेत्योवाच, तत हन्त, अहमनेनात्मानं निष्क्रीणा इति । स वरुणं राजानमुपससार, अनेन त्वा यजा इति । तथेति । [२]भूयान् वै ब्राह्मणः क्षत्रियादिति वरुण उवाच । तस्मा एतं राजसूयं यज्ञक्रतुं प्रोवाच । तमेतमभिषेचनीये[३] पुरुषं पशुमालेभे[४] ।

**प्रश्नाः**— (१) नारदोक्तं पुत्रलाभप्राशस्त्यं स्ववाक्यैः कथयत । (२) जातेऽपि पुत्रे वरुणयागस्योपेक्षां हरिश्चन्द्रः कथं कृतवान् ? (३) नगरं गन्तुकामस्यापि रोहितस्य परावर्तने इन्द्रस्य कोऽभिप्रेतोऽर्थः ? (४) अन्ते च प्रतिश्रुतो वरुणयागः कथं पूर्णतां प्राप ?

---

# १३ सोमदत्तचरितम्

**परिचयः** — संस्कृतभाषायां गद्यस्यापेक्षया पद्यमयमेव काव्यं विपुलमुपलभ्यते इत्यस्य कारणं तु प्राचीनपारिपाटिमाश्रित्य पद्यस्य गेयतया प्रायो बहवः कवयः पद्यरचनां कर्तुं दृढं प्रयतमानाः प्रकृत्या एव गद्यरचनापराङ्मुखा दृश्यन्ते । अत एव कवीनां निकषायमाणायां गद्यरचनायां

---

१ मूल्येन क्रेतुम् अभिलषामि, २ अभ्यधिकः, ३ सुत्यादिने ४ आहन्तुं निश्चितवान्.

प्रयत्य प्रथितयशस्सु कविषु सुबन्धुदण्डिबाणभट्टप्रमुखाः कराङ्गुलिगणेयनामानः केचन एव स्वकीयाभिः सहृदयाह्लादिनीभिः कृतिभिर्नीराजिता विराजन्ते। तेषु 'कविर्दण्डी, कविर्दण्डी, कविर्दण्डी न संशयः' इति वचसा वाग्देवतया सरस्वत्या स्वयं प्रशंसितः कविवरो दण्डी क्रिस्ताब्दस्य षष्ठे सप्तमे वा शतके सञ्जातः। वैदर्भीं रीतिं विशेषतः प्रस्तुवन्नयं विदर्भदेशीय इति विद्वांसो मन्यन्ते।

त्रयोऽग्नयस्त्रयो वेदास्त्रयो देवास्त्रयो गुणाः।
त्रयो दण्डिप्रबन्धाश्च त्रिषु लोकेषु विश्रुताः॥ इति

पद्ये राजशेखरेण प्रदत्तबहुमानः, काव्यादर्शावन्तिसुन्दरीकथादशकुमारचरिताख्यानां त्रयाणां ग्रन्थानां प्रणेता अयं कविः 'दण्डिनः पदलालित्यम्' अत्यभियुक्तोक्त्या अपि विदुषां नितरां परिचित एव।

कथाकथनकुशलेन कविवरेणानेन दशकुमारचरितनिबन्धनेऽवलम्बितो नूतनः प्रकारः श्रोतृवाचकानां कथाश्रवणवाचनकुतूहलं प्रतिकलं प्रवर्धयति। अत्र ग्रन्थे वर्णितचरिता दश कुमाराः दिग्विजयार्थं प्रस्थिताः कारणेन केनापि परस्परवियुक्ताः अन्योन्यान्वेषणपराः देशान्तरेषु बहुविधभाषावेषाचारान्, सुखदुःखानि च विविधान्यनुभूय सुदैववशात् पुनरेकत्र समायान्ति स्वयमनुभूतं वृत्तजातं चान्येभ्यो निवेदयन्ति। सोऽयं वर्णनाप्रकारः बहुविधै रोमहर्षकैरत्यद्भुतभयानकशृंगारादिरसपरिपोषकैः प्रसङ्गैर्वाचकमनांसि समाह्लादयति।

अत्र वर्णितेषु दशसु कुमारेषु प्रधानो राजपुत्रो मगधदेशशेखरीभूतायां पुष्पपुर्यां नाम नगर्यां राजधान्यां धर्मेण प्रजाः पालयितू राज्ञो राजहंसस्य सच्चरितः सूनू राजहंसो नाम। अन्यौ द्वौ राजपुत्रौ महाराजराजहंसस्य प्रियसुहृदो मिथिलाधिपस्य प्रहारवर्मणस्तनूजावुपहारवर्मापहारवर्माणौ। अन्ये च राजहंसस्य कुलपरम्परागतानाममात्यानां पुत्राः प्रमतिमित्रगुप्तमन्त्रगुप्त-

विश्रुतसोमदत्तार्थपालपुष्पोद्भवसंज्ञकाः । एतेषु सप्तसु पुष्पोद्भवः सुश्रुताख्यस्यामात्यस्य भ्रातू रत्नोद्भवस्यात्मजः ।

महर्षिवामदेवेन प्रेरितमनोरथाः राज्ञा च राजहंसेनानुमतास्ते दश कुमारा दिग्विजयार्थं प्रास्थिताः । किन्तु मध्येमार्गं मातङ्गेन नाम द्विजन्मना स्वसाहाय्यार्थमाकारितो राजवाहनः परित्यज्य तान्नव कुमारान् निशायामेव मातङ्गाद्वितीयः पातालदेशं गतः । तेऽपि नव कुमाराः प्रातरुत्थाय राजवाहनमितस्ततोऽन्विष्याप्यविलोकयन्तो मिथः समयं विधाय पुनरायातुं राजवाहनान्वेषणपरा महीपर्यटनमारभन्त । राजवाहनोऽपि मातङ्गसाहाय्यकक्कृत्यं यथासमयं सम्पाद्य तमेव प्रदेशं पुनः प्रातः स्वसुहृदस्तत्राविलोक्य निर्विण्णमनास्तानेव द्रष्टुमितस्ततो भ्रमन् गच्छता कालेन शिलां नाम नगरीमागतः । तत्र रमणीये कस्मिंश्चिदुपवने तरोरधश्छायायामुपाविश्य विश्रान्तिसुखं क्षणमनुभवन्, स्त्रिया सार्धं शिबिकायामारूढं पुरतः समायान्तं पुरुषमेकं ददर्श । तमेव च स्वसुहृदं सोमदत्तं समाकलय्य महत्या प्रीत्या तमनामयं पप्रच्छ । सोऽपि महाभाग्यतया अकाण्ड एव स्वामिदर्शनोल्लसितः शीघ्रं शिबिकातोऽवतीर्य प्रमोदाश्रुपूर्णनयनस्तं गाढं समालिङ्ग्य तेन पृष्टः स्ववृत्तान्तमेवं न्यवेदयत—

'देव भवच्चरणसेवाभिलाषीभूतोऽहं भ्रमन्नेकस्यां [1]वनावनौ पिपासाकुलो लतापरिवृतं शीतलं नदसलिलं पिबन्नुज्ज्वलाकारं रत्नं तत्रैकमद्राक्षम् । तदादाय गत्वा कंचनाध्वानमम्बरमणे[2]रत्युष्णतया गन्तुमक्षमो वनेऽस्मिन्नेव किमपि देवतायतनं प्रविष्टो दीनाननं बहुतनयसमेतं स्थविरमहीसुरमेकमवलोक्य कुशलमुदितदयोऽहमपृच्छम् । कार्पण्यविवर्णवदनो [3]महदाशापूर्णमानसोऽवोचदग्रजन्मा—' महाभाग, सुतानेतान्मातृहीनाननेकैरुपायै रक्षन्निदानीम-

---

१ काननभूमौ २ सूर्यस्य ३ महति (कार्ये) अशापूर्णं मानसं यस्य सः.

स्मिन्कुदेशे भैक्ष्यं सम्पाद्य ददद्देतेभ्यो वसामि शिवालयेऽस्मिन्' इति। 'भूदेव एतत्कटकाधिपती राजा कोऽस्य देशस्य, किं नामधेयः, किमत्रागमनकारणमस्य' इति पृष्टोऽभाषत महीसुरः— 'सौम्य, मत्तकालो नाम लाटेश्वरो देशस्यास्य पालयितुर्वीरकेतोस्तनयां वामलोचनां नाम तरुणीरत्नमसमानलावण्यं श्रावंश्रावमधृतदुहितृ-प्रार्थनस्य तस्य नगरीमरौत्सीत्। वीरकेतुरपि भीतो महदुपाय-नमिव तनयां मत्तकालायादात्। तरुणीलाभहृष्टचेता लाटपतिः 'परिणेया निजपुर एव' इति निश्चित्य गच्छन्निजदेशं प्रति संप्रति मृगयादरेणात्र वने सैन्यवासमकारयत्। कन्यासारणे[1] नियुक्तो मानपालो नाम वीरकेतुमन्त्री मानधनश्चतुरङ्गबलसमन्वितोऽन्त-र्बिभेद[2]' इति। विप्रोऽसौ बहुतनयो विद्वान् निर्धनः स्थविरश्च दानयोग्य इति तस्मै करुणापूर्णमना रत्नमदाम्। परमाह्लादविक-सिताननोऽभिहितानेकाशीः कुत्रचिदग्रजन्मा जगाम। अध्वश्रम-खिन्नेन मया तत्र निरवेशि निद्रासुखम्। तदनु पश्चान्निगडितबाहु-युगलः स भूसुरः कशाघातचिह्नितगात्रोऽनेकनैस्त्रिंशिकानुयातोऽ-भ्येत्य माम् 'असौ दस्युः' इत्यदर्शयत्। परित्यक्तभूसुरा राजभटा रत्नावाप्तिप्रकारं मदुक्तमनाकर्ण्य भयरहितं मां गाढं नियम्य रज्जुभिरानीय कारागारम् 'एते तव सखायः' इति निगडितान् कांश्चिन्निर्दिष्टवन्तो मामपि निगडितचरणयुगलमकार्षुः। किंकर्तव्य-तामूढेन निराशक्लेशानुभवेनावोचि मया—ननु पुरुषा वीर्यपरुषाः, निमित्तेन केन निर्विशथ कारावासदुःखं दुस्तरम्। यूयं वयस्या इति निर्दिष्टमेतैः, किमिदम्' इति। तथाविधं मामवेक्ष्य भूसुरा-न्मया श्रुतं लाटपतिवृत्तान्तं व्याख्याय चोरवीराः पुनरवोचन्।

---

१ कन्यायाः सारणं प्रापणम्, २ वीरकेतोः भिन्नः अभूत्.

—'महाभाग, वीरकेतुमन्त्रिणो मानपालस्य किंकरा वयम्। तदाज्ञया लाटेश्वरमारणाय रात्रौ सुरङ्गाद्वारेण तदगारं प्रविश्य तत्र राजाभावेन विषण्णा बहुधनमाहृत्य महाटवीं प्राविशाम। अपरेद्युश्च पदान्वेषिणो राजानुचरा बहवोऽभ्येत्य धृतधनचयानस्मान्परितः परिवृत्य दृढतरं बद्ध्वा निकटमानीय समस्तवस्तुशोधनवेलायामेकस्यानर्घ्यरत्नस्याभावेनास्मद्वधाय माणिक्यादानायास्मान्किलाङ्शृखलयन्' इति। श्रुतरत्नरत्नावलोकनस्थानोऽहम् 'इदं तदेव माणिक्यम्' इति निश्चित्य भूदेवदाननिमित्तां दुरवस्थामात्मनो जन्म नामधेयं युष्मदन्वेषणपर्यटनप्रकारं चाभाष्य समयोचितैः संलापैर्मैत्रीमकार्षम्। ततोऽर्धरात्रे तेषां मम च शृङ्खलाबन्धनं निर्भिद्य तैरनुगम्यमानो निद्रितस्य द्वाःस्थगणस्यायुधजालमादाय पुररक्षान् पुरतोऽभिमुखागतान् पटुपराक्रमलीलयाभिद्राव्य मानपालशिबिरं प्राविशम्। मानपालो निजकिंकरेभ्यो मम कुलाभिमानवृत्तान्तं तत्कालीनं विक्रमं च निशम्य मामार्चयत्।

परेद्युर्मत्तकालेन प्रेषिताः केचन पुरुषा मानपालमुपेत्य 'मन्त्रिन्, मदीयराजमन्दिरे सुरङ्गया बहुधनमपहृत्य चोरवीराः भवदीयं कटकं प्राविशन्। तानर्पय। नो चेन्महाननर्थः संभविष्यति' इति क्रूरतरं वाक्यमब्रुवन्। तदाकर्ण्य रोषारुणितनेत्रो मन्त्री 'लाटपतिः कः? तेन मैत्री का, पुनरस्य वराकस्य सेवया किं लभ्यम्' इति तान्निरभर्त्सयत्। ते च मानपालोक्तं विप्रलापं मत्तकालाय तथैवाकथयन्। कुपितोऽपि लाटपतिर्दोर्वीर्यगर्वेणाल्पसैनिकसमेतो योद्धुमभ्यगात्। पूर्वमेव कृतरणनिश्चयो मानी मानपालः सन्नद्धयोधो युद्धकामो भूत्वा निःशङ्कं निरगात्। अहमपि सबहुमानं मन्त्रिदत्तानि बहुलतुरङ्गमोपेतं चतुरसारथिं रथं च दृढतरं कवचं

मदनुरूपं चापं च विविधबाणपूर्णं तूणीरद्वयं रणसमुचितान्यायुधानि गृहीत्वा युद्धसन्नद्धो मदीयबलविश्वासेन रिपूद्धरणोद्युक्तं मन्त्रिणमन्वगाम् । परस्परमत्सरेण तुमुलसङ्गरकरमुभयसैन्यमतिक्रम्य समुल्लसद्भुजाटोपेन बाणवर्षं तदङ्गे विमुञ्चन्नरातीन्प्राहरम् । ततोऽतिरयतुरङ्गमं मद्रथं तन्निकटं नीत्वा शीघ्रलङ्घनोपेततदीयरथोऽहमरातेः शिरःकर्तनमकार्षम् । तस्मिन्पतिते तदवशिष्टसैनिकेषु पलायितेषु नानाविधहयगजादिवस्तुजातमादाय परमानन्दसंनतो मन्त्री ममानेकविधां संभावनामकार्षीत् । मानपालप्रेषितात्तदनुचरादेनमखिलमुदन्तजातमाकर्ण्य सन्तुष्टमना राजाभ्युद्गतो मदीयपराक्रमे विस्मयमानः समहोत्सवममात्यबान्धवानुमत्या शुभदिने निजतनयां मह्यमदात् । ततो यौवराज्याभिषिक्तोऽहमनुदिनमाराधितमहीपालचित्तो वामलोचनयानया सह नानाविधं सौख्यमनुभवन्भवद्विरहवेदनाशल्यसुलभवैकल्यहृदयः सिद्धादेशेन सुहृज्जनावलोकनफलं प्रदेशं महाकालनिवासिनः परमेश्वरस्याराधनायाद्य पत्नीसमेतः समागतोऽस्मि । भक्तवत्सलस्य गौरीपतेः कारुण्येन त्वत्पदारविन्दसन्दर्शनानन्दसन्दोहो मया लब्धः ' इति ।

दशकुमारचरिते पूर्वपीठिकायां तृतीयोच्छ्वासः

**प्रश्नाः**—(१) सोमदत्तस्य चरितं संस्कृतभाषया वर्णयत । (२) भूसुरः 'असौ दस्युः' इति कं निरदिशत् ? (३) मत्तकालेन मानपालाय कः सन्देशः प्रहितः ? तस्य च किमुत्तरं तेन प्राप्तम् ? तस्य परिणामः कीदृशः सञ्जातः ? (४) माणिक्याधिगमवृत्तान्तं सोमदत्तकथितं स्वभाषया वर्णयत । (५) ससन्दर्भमर्थं स्पष्टयत— १ 'परिणेया निजपुर एव'। २ 'पुनरस्य वराकस्य सेवया किं लभ्यम्'? ३ 'नो चेन्महाननर्थो भविष्यति'। (६) मत्तकालः वीरकेतुं प्रति किमर्थमभ्ययात् ? (७) मानपालः स्वाभिधेयं कथं सार्थं चकार ?

# बाणवाणीविलासः

**परिचय** :— बाणभट्टो नाम कविः क्रिस्ताब्दस्य सप्तमे शतके बभूव। अयं च गद्यरचनाया प्राथम्यं भजते। श्रीहर्षवर्धनस्य नाम राज्ञः सभाया-मयं राजकविः आसीत्। अयं च विविधान् गद्यग्रन्थान् नाटकानि च निब-बन्ध। तेषु सर्वेष्वपि 'कादम्बरी' नाम अद्भुता प्रणयकथा रसिकानां विदुषां मनांसि आह्लादयितुं प्रभवतितराम्। साहित्यवाङ्मये प्राथमिकग्रन्था-नधीत्य काव्यरसास्वादनसमर्थः एवास्य ग्रन्थस्य माधुर्यास्वादक्षमो भवति। अत एव नारिकेलसमपाकेषु प्रौढग्रन्थेषु एव अस्य अन्तर्भावो भवति। विशेषतः दीर्घसमासप्रचुरा विविधालङ्कारभूयिष्ठा च अस्य कवयितुः रचनाशैली यथा प्रौढानां मनोहारिणी न तथा प्रविविक्षूणां बालानाम्।

तस्मात् कादम्बरीग्रन्थात् अत्र केचन उद्धाराः संगृहीताः। तत्र प्रथमे शुकः जाबालिं ऋषिं वर्णयति। द्वितीये राजकुमारस्य चन्द्रापीडस्य विद्या-भ्यासवर्णनम्। एतद् द्वयं कादम्बरीग्रन्थस्य पूर्वार्धात् संगृहीतम्।

ग्रन्थममुं रिरचयिषुः कविः दुर्दैववशात् मध्ये एव अन्तकातिथिः अजा-यत। ततः तत्पुत्रः पुलिन्दः अवशिष्टम् भागं तया एव रचनाप्रणाल्या समापयामास। तेन विरचितः भागः उत्तरार्धः इति लोके प्रसिद्धिं गतः। तस्माच्च उत्तरार्धात् तृतीयः उद्धारः अत्र संगृहीतः। तत्र च परमसुहृदः वैशंपायनस्य अन्वेषणाय प्रस्थितं चन्द्रापीडं तज्जननी विलासवती तत्पिता तारापीडः च उपादिशताम् इति अत्रत्यः कथासंदर्भः अनुसन्धेयः।

तेषु तेषु स्थलेषु कथाप्रसङ्गानुसारेण एकस्यैव विशेष्यस्य सुदीर्घसमास-ग्रथितबहुतरविशेषणविन्यासेन विविधपरिस्थितिवर्णनेन वस्तुतत्त्वसाक्षात्कार-संपादने विद्यमानम् अस्य कवेः कौशलम् अनन्यसाधारणम्। तथैव सूक्ष्मतर-

वस्तुस्वभावनिरीक्षणेन कृतं तत्तद्वस्तुवर्णनमपि वाचकानां चित्तं तरली-करोति। येषां वाग्मित्वसंपादने अभिलाषो वर्तते, तादृशैः विद्योपासकैः कादम्बरीसदृशानि गद्यकाव्यानि मुहुर्मुहुर्वाचयित्वा एव स्वकीयरसना-ञ्चलस्य तीक्ष्णधारता सम्पादनीया न तु कदाचिदपि तत्र दीर्घसमासादि-रचनया अनादरः करणीयः इति सनिर्भरम् आवेद्यते।

## आश्रमाधिपतिः जाबालिः

**तस्य चैवंविधस्य[१] मध्यभागमण्डलमलंकुर्वाणस्यालक्तकालोहितपल्लवस्य मुनिजनालम्बितकृष्णाजिनजल[२]करकसनाथशाखस्य तापसकुमारिकाभिरालवालदत्तपीतपिष्टपञ्चाङ्गुलस्य हरिणशिशुभिः पीयमानालवालकसलिलस्य मुनिकुमारकाबद्धकुशचीरदाम्नो हरितगोमयोपलेपन[३]विविक्ततलस्य तत्क्षणकृतकुसुमोपहाररमणीयस्य नातिमहतः परिमण्डलतया विस्तीर्णावकाशस्य रक्ताशोकतरोरधश्छायायामुपविष्टम्,[४]उग्रतपोभिर्भुवनमिव सागरैः, कनकगिरिमिव कुलपर्वतैः, क्रतुमिव [५]वैतानिकवह्निभिः, कल्पान्तदिवसमिव रविभिः, कालमिव कल्पैः, समन्तान्महर्षिभिः परिवृतम्, उग्रशापकम्पितदेहया प्रणयिन्येव विहितकेशग्रहया क्रुद्धयेव कृतभ्रूभङ्गया मत्तयेवाकुलितगमनया प्रसाधितयेव प्रकटिततिलकया जरया गृहीतव्रतयेव भस्मधवलया धवलीकृतविग्रहम्, आयामिनीभिः पलितपाण्डुराभिस्तपसा विजित्य मुनिजनमखिलं धर्मपताकाभिरिवोच्छ्रिताभिरमरलोकमारोढुं पुण्यरज्जुभिरिवोपसंगृहीताभिरतिदूरप्रवृद्धस्य पुण्यतरोः कुसुममञ्जरीभिरिवोद्गताभिर्जटाभिरुपशोभि-**

---

१ आश्रमस्य इति पूर्वेणसंबन्धः, २ करकः पात्रविशेषः, ३ **विविक्तं** पूतम्, ४ महर्षिभिः इत्यनेन सम्बन्धः, ५ यज्ञीयाग्निभिः,

तम्, उपरचितभस्मत्रिपुण्ड्रकेण तिर्यक्प्रवृत्तत्रिपथगास्रोतस्त्रयेणे हिमगिरिशिलातलेनेव ललाटफलकेनोपेतम्, अधोमुखचन्द्रकला-काराभ्यामवलम्बितवलिशिथिलाभ्यां भ्रूलताभ्यामवष्टभ्यमान-दृष्टिम्, अनवरतमन्त्राक्षराभ्यासविवृताधरपुटतया निष्पतद्भिर-तिशुचिभिः सत्यप्ररोहैरिव स्वच्छेन्द्रियवृत्तिभिरिव करुणारसप्रवाहै-रिव दशनमयूखैर्धवलितपुरोभागम्, उद्वमदमलगङ्गाप्रवाहमिव जह्नुम्, अनवरतसोमोद्गारसुगन्धिनिश्वासावकृष्टैर्मूर्तिमद्भिः शापाक्षरैरिव सदामुखभागसंनिहितैः परिस्फुरद्भिरलिभिरवि-रहितम्, अतिकृशतया निम्नतरगण्डगर्तमुन्नततरहनुघोणमाकराल-तारकमवशीर्यमाणविरलनयनपक्ष्ममालमुद्गतदीर्घरोमरुद्धश्रवण-विवरमानाभिलम्बकूर्चकलापमाननमादधानम्, अतिचपलानामि-न्द्रियाश्वानामन्तःसंयमनरज्जुभिरिवातताभिः कण्ठनाडीभिर्निरन्त-रावनद्धकन्धरं समुन्नतविरलास्थिपञ्जरमंसावलम्बियज्ञोपवीतं वायुवशजनिततनुतरङ्गभङ्गमुत्प्लवमानमृणालमिव मन्दाकिनी-प्रवाहमकलुषमङ्गमुद्वहन्तम्, अमलस्फटिकशकलघटितमक्षवलय-मत्युज्ज्वलस्थूलमुक्ताफलग्रथितसरस्वतीहारमिव चलदङ्गुलि-विवरगतमावर्तयन्तम्, अनवरतभ्रमिततारकाचक्रमपरमिव ध्रुवम्, उन्नमता शिराजालकेन जरत्कल्पतरुमिव परिणतलतासंचयेन [1]निर-न्तरनिचितम्, अमलेन चन्द्रांशुभिरिवामृतफेनैरिव गुणसन्तानतन्तु-भिरिव निर्मितेन मानससरोजलक्षालितशुचिना दुकूलवल्कलेन द्वितीयेनेव जराजालकेन संच्छादितम्, आसन्नवर्तिना मन्दाकिनी-सलिलपूर्णेन त्रिदण्डोपविष्टेन स्फाटिककमण्डलुना [2]विकचपुण्डरी-कराशिमिव राजहंसेनोपशोभमानम्, स्थैर्येणाचलानां गाम्भीर्येण

१ सर्वतोव्याप्तम्, २ विकचं—विकासितम्.

सागराणां तेजसा सवितुः प्रशमेन तुषाररश्मेर्निर्मलतयाम्बरतलस्य १संविभागमिव कुर्वाणम्, वैनतेयमिव स्वप्रभावोपात्तद्विजाधिपत्यम्, कमलासनमिवाश्रमगुरुम्, जरच्चन्दनतरुमिव भुजङ्गनिर्मोकधवलजटाकुलम्, प्रशस्तवारणपतिमिव प्रलम्बकर्ण२वालम्, बृहस्पतिमिवाजन्मसंवर्धितकचम्, दिवसमिवोद्यदर्कबिम्बभास्वरमुखम्, शरत्कालमिव क्षीणवर्षम् शन्तनुमिव प्रियसत्यव्रतम्, अम्बिकाकरतलमिव रुद्राक्षवलयग्रहणनिपुणम्, शिशिरसमयसूर्यमिव कृतोत्तरासङ्गम्, वडवानलमिव संततपयोभक्षम्, शून्यनगरमिव दीनानाथविपन्नशरणम्, पशुपतिमिव भस्मपाण्डुरोमाश्लिष्टशरीरं भगवन्तं जाबालिमपश्यम्।

अवलोक्य चाहमचिन्तयम्— अहो प्रभावस्तपसाम्, इयमस्य शान्तापि मूर्तिरुत्तप्तकनकावदाता परिस्फुरन्ती सौदामिनीव चक्षुषः प्रतिहन्ति तेजांसि। सततमुदासीनापि महाप्रभावतया भयमिवोपजनयति प्रथमोपगतस्य। शुष्कनलकाशकुसुमनिपतितानलचटुलवृत्ति नित्यमसहिष्णु तपस्विनां तनुतपसामपि तेजः प्रकृत्या भवति। किमुत सकलभुवनतलवन्दितचरणानामनवरततपःक्षपितमलानां करतलामलकवदखिलं जगदालोकयतां दिव्येन चक्षुषा भगवतामेवंविधानामघक्षयकारिणाम्। पुण्यानि हि नामग्रहणान्यपि महामुनीनाम्, किं पुनर्दर्शनानि। धन्यमिदमाश्रमपदमयमधिपतिर्यत्र। अथवा भुवनतलमेव धन्यमखिलमनेनाधिष्ठितमवनितलकमलयोनिना। पुण्यभाजः खल्वमी मुनयो यदहर्निशमेनमपरमिव नलिनासनमपगतान्यव्यापारा मुखावलोकननिश्चलदृष्टयः पुण्याः कथाः शृण्वन्तः समुपासते। सरस्वत्यपि धन्या यास्य सततमतिप्रसन्ने करुणाजलनिस्यन्दिन्यगाधगाम्भीर्ये रुचिरद्विजपरिवारा मुख-

---

१ स्वकीय वस्तुनः परेभ्यः किञ्चि द्विभज्य प्रदानम्, २ बालः केशः पुच्छं च.

कमलसम्पर्कमनुभवन्ती निवसति हंसीव मानसे। चतुर्मुखमुखकमलवासिभिश्चतुर्वेदैः सुचिरादिदमपरमुचितमासादितं स्थानम्। एनमासाद्य शरत्कालमिव कलिकालजलदसमयकलुषिताः प्रसादमुपगताः पुनरपि जगति सरित इव सर्वविद्याः। नियतमिह सर्वात्मना कृतावस्थितिना भगवता परिभूतकलिकालविलसितेन धर्मेण न स्मर्यते कृतयुगस्य। धरणितलमनेनाधिष्ठितमालोक्य न वहति नूनमिदानीं सप्तर्षिमण्डलनिवासाभिमानमम्बरतलम्। अहो महासत्त्वेयं जरा याऽस्य प्रलयरविरश्मिनिकरदुर्निरीक्ष्ये रजनिकरकिरणपाण्डुशिरोरुहे जटाभारे फेनपुञ्जधवला गङ्गेव पशुपतेः क्षीराहुतिरिव शिखाकलापे विभावसोर्निपतन्ती न भीता। बहलाज्यधूमपटलमलिनीकृताश्रमस्य भगवतः प्रभावाद्भीतमिव रविकिरणजालमपि दूरतः परिहरति तपोवनम्। एते च पवनलोलपुञ्जीकृतशिखाकलापा रचिताञ्जलय इवात्र मन्त्रपूतानि हवींषि गृह्णन्त्येतत्प्रीत्याशुशुक्षणयः। तरलितदुकूलवल्कलोऽयं चाश्रमलताकुसुमसुरभिपरिमलो मन्दमन्दचारी सशङ्कमिवास्य समीपमुपसर्पति गन्धवाहः। प्रायो महाभूतानामपि दुरभिभवानि भवन्ति तेजांसि। सर्वतेजस्विनामयं चाग्रणीः। द्विसूर्यमिवाभाति जगदनेनाधिष्ठितं महात्मना। निष्कम्पेव क्षितिरेतदवष्टम्भात्। एष प्रवाहः करुणारसस्य, संतरणसेतुः संसारसिन्धोः, आधारः क्षमाम्भसाम्, परशुस्तृष्णालतागहनस्य, सागरः सन्तोषामृतरसस्य, उपदेष्टा सिद्धिमार्गस्य अस्तगिरिरसद्ग्रहस्य, मूलमुपशमतरोः, नाभिः प्रज्ञाचक्रस्य, स्थितिवंशो धर्मध्वजस्य, तीर्थं सर्वविद्यावताराणाम्, वडवानलः लोभार्णवस्य, निकषोपलः शास्त्ररत्नानाम्, दावानलः रागपल्लवस्य, महामन्त्रः क्रोधभुजङ्गस्य, दिवसकरो मोहान्ध-

कारस्य, अर्गलाबन्धो नरकद्वाराणाम्, कुलभवनमाचाराणाम्, आयतनं मङ्गलानाम्, अभूमिर्मदविकाराणाम्, दर्शकः सत्पथानाम्, उत्पत्तिः साधुतायाः, [1]नेमिरुत्साहचक्रस्य, आश्रयः सत्त्वस्य, प्रतिपक्षः कलिकालस्य, कोशस्तपसः, सखा सत्यस्य, क्षेत्रमार्जवस्य[2], प्रभवः पुण्यसंचयस्य, अदत्तावकाशो मत्सरस्य, अरातिर्विपत्तेः, अस्थानं परिभूतेः[3], अननुकूलोऽभिमानस्य, असंमतो दैन्यस्य, [4]अनायत्तो रोषस्य, अवशो विषयाणाम्, अनभिमुखः सुखानाम्। अस्य भगवतः प्रसादादेवोपशान्तवैरमपगतमत्सरं तपोवनम्। अहो प्रभावो महात्मनाम्। अत्र हि शाश्वतिकमपहाय विरोधमुपशान्तात्मानः तिर्यञ्चोऽपि तपोवनवसतिसुखमनुभवन्ति। तथा हि, एष विकचोत्पलवनरचनानुकारिणमुत्पतच्चारुचन्द्रकशतं हरिणलोचनद्युतिशबलमभिनव[5]शाद्वलमिव विशति शिखिनः कलापमातपाहतो निःशङ्कमहिः। अयमुत्सृज्यमातरमजातकेसरैः केसरिशिशुभिः सहोपजातपरिचयः क्षरत्क्षीरधारमापिबति कुरङ्गशावकः सिंहीस्तनम्। एष मृणालकलापाशङ्किभिः शशिकरधवलं सटाभारमामीलितलोचनो बहु मन्यते द्विरदकलभैराकृष्यमाणं मृगपतिः। इदमिह कपिकुलमपगतचापलमुपनयति मुनिकुमारकेभ्यः स्नातेभ्यः फलानि। एते च न निवारयन्ति मदान्धा अपि गण्डस्थलीभाञ्जि मदजलपाननिश्चलानि मधुकरकुलानि संजातदयाः कर्णतालैः करिणः। किं बहुना, तापसाग्निहोत्रधूमलेखाभिरुत्सर्पन्तीभिरनिशमुपपादितकृष्णाजिनोत्तरासङ्गशोभाः फलमूलभृतो वल्कलिनो निश्चेतनास्तरवोऽपि सनियमा इव लक्ष्यन्तेऽस्य भगवतः समीपवर्तिनः। किं पुनः सचेतनाः प्राणिनः' इति।

---

१ धारा, २ सरलतायाः, ३ पराभवस्य, ४ अनधीनः, ५ तृणैर्हरितम्.

## चन्द्रापीडस्य विद्याभ्यासः

क्रमेण कृतचूडाकरणादिक्रियाकलापस्य शैशवमतिचक्राम चन्द्रापीडस्य। तारापीडो व्यासङ्गविघातार्थं बहिर्नगरादनुसिप्रमर्ध-क्रोशमात्रायामम्, अतिमहता तुहिनगिरिशिखरमालानुकारिणा सुधाधवलितेन प्राकारमण्डलेन परिवृतम्, अनुप्राकारमाहितेन महता परिखावलयेन परिवेष्टितम्, अतिदृढकपाटसंपुटम्, उद्घाटितैकद्वारप्रवेशम् एकान्तोपरचिततुरङ्गवाह्याली[1]विभागम्, अधः-कल्पितव्यायामशालम्, अमरागाराकारं विद्यामन्दिरमकारयत्। सर्वविद्याचार्याणां च संग्रहे यत्नमतिमहान्तमन्वतिष्ठत्। तत्रस्थं च तं केसरिकिशोरकमिव पञ्जरगतं कृत्वा प्रतिषिद्धनिर्गमम्, आचार्यकुलपुत्रप्रायपरिजनपरिवारं, अपनीताशेषशिशुजनक्रीडा-व्यासङ्गम्, अनन्यमनसम्, अखिलविद्योपादानार्थमाचार्येभ्यश्चन्द्रापीडं शोभने दिवसे वैशम्पायनद्वितीयमर्पयाम्बभूव। प्रतिदिनं चोत्था-योत्थाय सह विलासवत्या विरलपरिजनस्तत्रैव गत्वैनमालोकया-मास राजा।

चन्द्रापीडोऽपि अनन्यहृदयतया तथा यन्त्रितो राज्ञाऽचिरेणैव यथास्वमात्मकौशलं प्रकटयद्भिः पात्रवशादुपजातोत्साहैराचार्यैरुप-दिश्यमानाः सर्वा विद्या जग्राह। मणिदर्पण इवातिनिर्मले तस्मिन् संचक्राम कलाकलापः। तथा हि,—पदे[2], वाक्ये[3], [4]प्रमाणे, धर्मशास्त्रे, राजनीतिषु, व्यायामविद्यासु, चापचक्रचर्मकृपाणशक्तितोमरपरशु-गदाप्रभृतिषु सर्वेष्वायुधविशेषेषु, रथचर्यासु, गजपृष्ठेषु, तुरङ्गेषु, वीणावेणुमुरजकांस्यतालदर्दुरपुटप्रभृतिषु वाद्येषु, भरतादिप्रणीतेषु नृत्यशास्त्रेषु, नारदीयप्रभृतिगान्धर्ववेदविशेषेषु, हस्तिशिक्षायाम्,

---

१ शिबिकादयः, २ व्याकरणे, ३ मीमांसायाम्, ४ न्यायवैशेषिकादिशास्त्रेषु.

तुरङ्गवयोज्ञाने, पुरुषलक्षणे, चित्रकर्मणि, पत्रच्छेद्ये, पुस्तकव्यापारे, लेख्यकर्मणि, सर्वासु द्यूतकलासु, शकुनिरुतज्ञाने, ग्रहगणिते, रत्नपरीक्षासु, दारुकर्मणि, दन्तव्यापारे, वास्तुविद्यासु, आयुर्वेदे, यन्त्रप्रयोगे, विषापहरणे, सुरङ्गोपभेदे, तरणे, लङ्घने, प्लुतिषु, इन्द्रजाले, कथासु, नाटकेषु, आख्यायिकासु, काव्येषु, महाभारतपुराणेतिहासरामायणेषु, सर्वलिपिषु, सर्वदेशभाषासु, सर्वसंज्ञासु, सर्वशिल्पेषु, छन्दःसु, अन्येष्वपि कलाविशेषेषु परं कौशलमवाप ।

## प्रस्थितं चन्द्रापीडं प्रति पित्रोरुपदेशः

अथानुरक्तकमलिनीसमागमाप्राप्तिसंतापादिव समं दिवसेनास्तमुपगतवति तेजसाम्पतौ, तेजःपतिपतनाच्चितानलमिव संध्यारागमपराशया[१] सह विशति पश्चिमे गगनभागे, संध्यानलस्फुलिङ्गनिकर इव स्फुरति तारागणे, दिवसविरामान्मूर्च्छागमेनेव तमसा निमील्यमानेषु दिङ्मुखेषु, निवासाभिमुखमुखरेषु वियद्वियोगदुःखादिव [२]कृतान्तप्रलापेषु वयःसमूहेषु, जनितप्रकाशं जन्मेवालोक्य दोषागमं निरालोकं गर्भमिव तमःप्रविष्टे पुनर्जीवलोके, निजालोकाद्विकाशितपूर्वदिग्वधूवदने जन्मान्तरागत इवोदयगिरिवर्तिनि नक्षत्रसमागमसुखमनुभवति भगवति भूयो भूयः स्वकान्तिनिर्भरान्निष्कलङ्क इव नक्षत्रनाथे, विस्पष्टायां निशीथिन्यां, प्रस्थानमङ्गले प्रणामायोपगतं चन्द्रापीडं पीडयान्तर्विलीयमानेव बाष्पोत्पीडमपारयन्ती निवारयितुमत्यायताभ्यामपि नेत्राभ्यां कृतप्रयत्नाप्यमङ्गलशङ्कया विलासवती तं मन्युरागावेग[३]गद्गदिकोपरुध्यमानाक्षरमवादीत् ।

'तात, युज्यते ह्यङ्कलालितस्य गर्भरूपस्य प्रथमगमने गरीयसी

---

१ पश्चिमया, २ कृतः अन्तःप्रलापो विलापो यैः, एवंभूतेषु, ३ गद्गदिका गद्गदध्वनिः.

हृदयपीडा, यस्मिन्प्रथममेवाङ्कादपैति। मम पुनर्नेदृशी प्रथमगमनेऽपि ते पीडा समुत्पन्ना, यादृशी तव गमनेनाधुना। दीर्यत इव मे हृदयम्। समुत्पाटचन्त इव मर्माणि। उत्क्वथ्यत इव शरीरम्। उत्प्लवत इव चेतः। विघटन्त इव सन्धिबन्धनानि। निर्यान्तीव प्राणाः। न किञ्चित्समादधाति धीः। सर्वमेव शून्यं पश्यामि। न पारयाम्यात्मानमिव हृदयं धारयितुम्। धृतोऽपि बलादागच्छति मे बाष्पोत्पीडो मुहुर्मुहुः। समाहितापि मङ्गलसम्पादनाय ते चलति मतिः। न जानाम्येव किमुत्पश्यामि। किन्निमित्तं चेयमीदृशी मे हृदयपीडेत्येतदपि न वेद्मि। किं बहुभ्यो दिवसेभ्यः कथमप्यागतो मे वत्सो झटित्येव पुनर्गच्छतीति। किं वैशम्पायनवियोगादुद्विग्नस्य गमनमेकाकिनस्ते समुत्प्रेक्ष्येति। न पुनर्वैशम्पायनवृत्तान्तादात्मन एव दुःखिततयेति। न चैवंविधया पीडया वैशम्पायनानयनाय गच्छतस्ते मे गमनं विनिवारयितुं पारयति वाणी। हृदयं पुनर्नेच्छत्येव त्वदीयं गमनम्। तदीदृशीं मे पीडां विभाव्य यथा पुरा स्थितं न तथा क्वचिदासङ्गमाबध्यतिदीर्घकालमायुष्मता स्थातव्यम्। अस्य चार्थस्य कृते साञ्जलिबन्धेन शिरसाभ्यर्थये वत्सम्' इत्यादिशन्तीं स्वमातरं सुदूरं प्रसारितावनम्रमूर्तिश्चन्द्रापीडो व्यजिज्ञपत्। 'अम्ब, तदा दिग्विजयप्रसङ्गात्स्थितम्। अधुना पुनरयमेव कालक्षेपो यावत्तमुद्देशं परापतामि। तत्पुनश्चिरागमकृता न भावनीया मनागपि हृदये पीडा त्वया' इत्येवं विज्ञप्ता चन्द्रापीडेन संनिरुध्योद्बाष्पवेगान् कथं कथमपि संस्तभ्यात्मानं निर्वर्तितगमनमङ्गला, गलता प्रस्रवेण सिञ्चन्ती, शिरसि चोपाघ्राय गाढं सुचिरमालिङ्गय, गच्छद्भिरिव प्राणैः कृच्छ्रान्मुमोच तं माता। मुक्तश्च मात्रा पितुः प्रणतये वासभवनमगमत्। तत्र च 'देव, नमस्करोति युवराजः, इत्यावेदिते द्वाररक्षिणा, प्रविश्य क्षोणीतलनिवेशितशिरसा

शयनवर्तिनो ननाम दूरस्थित एव पितुः पादौ। अथ तथा प्रणतमालोक्य किञ्चिदुन्नमितपूर्वकायः शयनगत एवाहूय तं पिता चक्षुषा पिबन्निव, प्रेम्णा परिष्वज्य गाढमिव सहसोद्गताविरलबाष्परयपर्याकुलाक्षोऽन्तःक्षोभावेगक्षिप्ताक्षरमब्रवीत्। 'वत्स, पित्राहं दोषेषु संभावित इत्येषा मनागपि मनसि वत्सेन न [1]दुःखासिका कार्या। विनयाधानात्प्रभृति सम्यक्परीक्षितोऽस्यस्माभिः। परीक्ष्य गुणगणैरेवाधिगम्यो राज्यभारस्त्वय्यारोपितो न तनयस्नेहादेव। राज्यं हि नामैतत्पृथ्वीभारेणैवातिदुरुद्वहम्, महीभृत्संबाधतयैवातिसंकटम्, कुटिलनीतिप्रचारेणैवातिदुःसंचारम्, चतुःसमुद्रव्याप्त्यैवातिमहत्, महासाधनप्रसाध्यतयैवातिदुःसाध्यम्, अपर्यवसानकार्यतन्त्रजालेनैवातिगहनम्, उत्तुङ्गवंशप्रतिष्ठिततयैवातिदुरारोहम्, अहितसहस्रोद्धरणेनैवातिदुरुद्धरम्, अपि च समवृत्तितयैवातिविषमम्, अनेकतीर्थकल्पनयैव दुरवतारं, कण्टकशोधनेनैव दुर्ग्रहम्, अखिलप्रजापालनेनैव दुःपालम्, नाविक्रान्ते, नामहोत्साहे, नाप्रियवादिनि, नासत्यसंधे, नाप्राज्ञे, नाविवेकिनि, नाकृतज्ञे, नानुदारव्यवहृतौ, नासंविभागशीले, नान्यायवर्तिनि, नाधर्मरुचौ, नाशास्त्रव्यवहारिणि, नाशरण्ये, नाब्रह्मण्ये[2], नाकृपालौ, नामित्रवत्सले, नावश्यात्मनि, नानिर्जितेन्द्रिये, नासेवके पदमेवादधाति। यः खलु समग्रैर्गुणैराकृष्य बलात्प्रतिबन्धमस्य चञ्चलप्रकृतेः कर्तुं समर्थस्तत्रास्ते। गुरवोऽपि अपगतस्खलितभीतयस्तत्रैव समारोपयन्त्येतदालोचित[3]परावराः। तदनेनैव बोद्धव्यमिदं वत्सेन नास्ति मयि दोष इति।

अपि च सम्प्रति कस्मिन्भारमवक्षिप्याणुमपि दोषमाचरसि। त्वयैव सकललोकानुरञ्जने यतितव्यम्। गतः खलु कालोऽस्माकम्।

---

१ चिन्ता, २ ज्ञानानिष्ठारहिते, ३ परं पारमार्थिकम्, अवरं व्यावहारिकम्.

अस्माभिरस्खलितैश्चिरं पदे स्थितम्। न पीडिताः प्रजा लोभेन। नोद्वेजिता गुरवो मानेन। न विमुखिताः सन्तो मदेन। नोत्रासिताः प्राणिनः क्रोधेन। न ह्रासित आत्मा हर्षेण। न हतः परलोकः कामेन। न राजधर्मोऽनिरुद्धः। स्वरुच्या वृद्धाः समासेविता न व्यसनानि। सतां चरितान्यनुवर्तितानि नेन्द्रियाणि। धनुरवनामितं न मनः। वृत्तं रक्षितं न शरीरम्। वाच्याद्भीतं न मरणात्। उपभुक्तानि सुरलोकदुर्लभानि सर्वविषयोपभोगसुखानि। यौवनेच्छया पर्याप्तमकार्यपरिहरात्। कार्यानुष्ठानाच्चोपार्जितः परोऽपि लोकः। चेतसि मे त्वज्जन्मना च कृतार्थ एवास्मि। तदयमेव मे मनोरथः, दारपरिग्रहात्प्रतिष्ठिते त्वयि सकलमेव मे राज्यभारमारोप्य जन्मनिर्वाहलघुना हृदयेन पूर्वराजर्षिगतं पन्थानमनुयास्यामीति। अस्य च मेऽतर्कितमेवायमग्रतः प्रतिरोधको वैशम्पायनवृत्तान्तः स्थितः। मन्ये च न [1]संपत्तव्यमेवानेन। अन्यथा क्व वैशम्पायनः, क्व चैवंविधमस्य स्वप्नेऽप्यसंभावनीयं समाचेष्टितम्। तद्गतेनापि तथा कर्तव्यं वत्सेन यथा न चिरकालमेव मे मनोरथोऽन्तर्हृदय एव [2]विपरिवर्तते इत्यभिधाय किञ्चिदुत्तानितेन मुखेनैव संपीडितं हृदयमिव ताम्बूलमर्पयित्वा व्यसर्जयत्।

**प्रश्नाः**— (१) जाबालेः जटासु कविः किं किमुत्प्रेक्षते ? (२) कीदृशः रक्ताशोकः ? (३) जाबालिं दृष्ट्वा शुकः किं किमचिन्तयत् ? (४) कादम्बरीकथां संक्षेपेण लिखत। (५) कीदृशमासीच्चन्द्रापीडस्य विद्यामन्दिरम् (६) मातुः पितुश्चोपदेशे को भेदः किं च तत्र निदानम् ? (७) तारापीडः राज्यं कथं वर्णयति ?

---

१ भवितव्यम्, २ विलीनो भवति.

# १५ स तिष्ठतु पुरे मम

**परिचयः**– सर्वेषु देशेषु सर्वास्वपि च भाषासु नैकाः अद्भुताः लोककथाः वर्तन्ते। यद्यपीतिहासदृष्ट्या तासां कथानां पूर्णतया यथार्थता न संभवति तथापि तासां कथानां प्रथने किमपि कारणमवश्यमेव स्यात्। तदेव अद्भुतरसाश्रयेण तासु तासु लोककथासु अत्युक्त्या उपवर्णितमुपलभ्यते। अनया दृष्ट्या विचारे कृते केवलं शब्दतोऽयथार्थभूतासु अप्येतासु कथासु कश्चन सत्यांशः साररूपेण निगूढश्चातुर्यशालिभिरेव ज्ञातव्यो भवति। भोजकालिदासयोः, बिरबलाकबरयोः, तथैव अन्ययोरपि चतुरयोः स्वामितदाश्रितयोः मनोरञ्जिकाः बहवः कथाः लोकेषु प्रसिद्धाः सन्ति।

बल्लालः नाम कविः भोजकालिदासादीनाम् अनेकाः कथाः भोजप्रबन्धे नाम ग्रन्थे संजग्रन्थ। भोजराजः शूरो वदान्यः विदुषः कवीन् च सुतरां संमानयन् आसीत्। तेन तस्य राज्ये कुम्भकारकुविन्दगोपादिषु सामान्यजनेष्वपि कवित्त्वविद्वत्त्वसंपादने महानुत्साहः संववृधे। तदेव अस्मिन् ग्रन्थे बह्वीभिः कथाभिः संगृह्णानः कविर्बल्लालः इदमेव अभिप्रैति यत् 'यदि राजानः तदधिकारमनुतिष्ठन्तः मन्त्रिणः अन्ये चाधिकारिणः विद्वत्त्वे कवित्त्वे कलासु वा स्वयं रसिकाः आदरवन्तः स्युः तदा एव निखिलस्य राष्ट्रस्य सर्वतोमुखो विकासो भवति नान्यथा'। तादृक्षाणां राज्ञां मन्त्रिणां च लाभः राष्ट्रस्य महता पुण्यपरिपाकेनैव भवति। भोजराजसमये भारतस्य राष्ट्रस्य तादृशः पुण्यपरिपाकः परां सीमां प्राप्त आसीदिति ज्ञायते।

**ततः कदाचिद्राजा मुख्यामात्यं प्राह—**

**विप्रोऽपि यो भवेन्मूर्खः स पुराद्बहिरस्तु मे।**
**कुम्भकारोऽपि यो विद्वान् स तिष्ठतु पुरे मम ॥१॥ इति।**

अतः कोऽपि न मूर्खोऽभूद्धारानगरे।

अथ कदाचिद्वन्दितविद्वद्वृन्दे सिंहासनासीने कविशिरोमणौ कवित्वप्रिये प्रियप्रजाबान्धवे भोजराजे द्वारपाल एत्य प्रणम्य व्यजिज्ञपत्— राजन् कोऽपि विद्वान् द्वारि तिष्ठतीति। अथ राज्ञा 'त्वरितं प्रवेशय' इत्याज्ञप्ते कश्चिदभ्यगात् कानकमणिकुण्डलशाली दिव्यांशुकप्रावरणो नृपकुमार इव मृगमदपङ्ककलङ्कितगात्रो नवकुसुमसमभ्यर्चितशिराश्चन्दनाङ्गरागेण विलोभयन् विलास इव मूर्तिमान् कवितेव तनुमाश्रितः महेन्द्र इव महीवलयं प्राप्तो विद्वान्। तं दृष्ट्वा सकलापि विद्वत्परिषद्भयकौतुकयोः पात्रमासीत्। स च सर्वान् प्रणिपत्य आस्त। राजा भोजश्च तमालिङ्ग्य प्राह— सुकवे भवन्नाम्ना कान्यक्षराणि सौभाग्यावलम्बितानि? कस्य वा देशस्य भवद्विरहः सुजनान् बाधते? ततः कविर्लिखति राज्ञो हस्ते 'कालिदासः' इति। राजा वाचयित्वा पादयोः पतति।

ततस्तत्रासीनयोः कालिदासभोजयोरासीत्संध्या। राजा 'सखे संध्यां वर्णय' इत्यवादीत्। ततः कालिदासः वर्णयति—

व्यसनिन इव विद्या क्षीयते पङ्कजश्रीः
गुणिन इव कुदेशे दैन्यमायान्ति भृङ्गाः।
कुनृपतिरिव लोकं पीडयत्यन्धकारो
धनमिव कृपणस्य व्यर्थतामेति चक्षुः ॥२॥

ततः कदाचित् द्वारपालकः प्रणम्य भोजं प्राह– 'राजन्, द्रविडदेशात्कोऽपि 'लक्ष्मीधर' नामा कविर्द्वारमध्यास्ते' इति। राजा 'प्रवेशय' इत्याह। प्रविष्टमिव सूर्यमिव विभ्राजमानं चिरादप्यविदितवृत्तान्तं प्रेक्ष्य राजा विचारयामास। आह च—

आकारमात्रविज्ञानसंपादितमनोरथाः ।
धन्यास्ते ये न शृण्वन्ति दीनाः क्वाप्यर्थिनां गिरः ॥३॥

स चागत्य तत्र राजानं स्वस्तीत्युक्त्वा तदाज्ञयोपविष्टः प्राह—

देव इयं ते पण्डितमण्डिता सभा। त्वं च साक्षाद्विष्णुरसि। ततः किं नाम पाण्डित्यं मम । तथापि किञ्चिद्वच्मि—

भोजप्रतापं तु विधाय धात्रा शेषैर्निरस्तैः परमाणुभिः किम् ।
हरेः करेऽभूत्पविरम्बरे च भानुः पयोधेरुदरे कृशानुः ॥४॥ इति।

ततस्तेन परिषच्चमत्कृता। राजा च तस्य प्रत्यक्षरं लक्षं ददौ। पुनः कविराह– 'देव मया सकुटुम्बेनात्र निवासाशया समागतम्।

क्षमी दाता गुणग्राही स्वामी पुण्येन लभ्यते।
अनुकूलः शुचिर्दक्षः कविर्विद्वान् सुदुर्लभः ॥५॥ इति।

ततो राजा मुख्यामात्यं प्राह— 'अस्मै गृहं दीयताम्' इति। ततो निखिलमपि नगरं विलोक्य कमपि मूर्खममात्यो नापश्यत्, यं निरस्य विदुषे गृहं दीयते। तत्र सर्वत्र भ्रमन् कस्यचित्कुविन्दस्य[1] गृहं वीक्ष्य कुविन्दं प्राह— 'कुविन्द, गृहान्निःसर, तव गृहं विद्वानेष्यति' इति। ततः कुविन्दो राजभवनमासाद्य राजानं प्रणम्य प्राह— 'देव, भवदमात्यो मां मूर्खं कृत्वा गृहान्निःसारयति, त्वं तु पश्य मूर्खः पण्डितो वेति।

काव्यं करोमि न हि चारुतरं करोमि
यत्नात्करोमि यदि चारुतरं करोमि।
भूपालमौलिमणिमण्डितपादपीठ
हे [2]साहसाङ्क, [3]कवयामि [4]वयामि यामि ॥६॥

---

१ तन्तुवायस्य, २ साहसशीलः, ३ कविः इव आचरामि, ४ वस्त्रं निर्मिमे,

ततो राजा [1]त्वंकारवादेन वदन्तं कुविन्दं प्राह– ‘ ललिता ते पदपङ्क्तिः, कवितामाधुर्यं च शोभनम्, परंतु कवित्वं विचार्य वक्तव्यम् ’ इति। ततः कुपितः कुविन्दः प्राह— ‘ देव, अत्रोत्तरं भाति। किंतु न वदामि, राजधर्मः पृथग्विद्वद्धर्मात् ’ इति। राजा प्राह— ‘ अस्ति चेदुत्तरं ब्रूहि ’ इति। कुविन्दः प्राह— कालिदासादृते अन्यं कविं न मन्ये। कोऽस्ति ते सभायां कालिदासादृते कवितातत्त्वविद्विद्वान्।

यत्सारस्वतवैभवं गुरुकृपापीयूषपाकोद्भवं
तल्लभ्यं कविनैव नैव हठतः पाठप्रतिष्ठाजुषाम्[2]।
कासारे दिवसं वसन्नपि पयःपूरं परं पङ्किलं
कुर्वाणः कमलाकरस्य लभते किं सौरभं सैरिभः[3] ॥७॥

ततो राजा ‘ साधु भोः कुविन्द ’ इत्युक्त्वा तस्याक्षरलक्षं ददौ। ‘ मा भैषीः ’ इति पुनः कुविन्दं प्राह।

ततः कदाचित्कुम्भकारवधू राजगृहमेत्य द्वारपालं प्राह– ‘ द्वारपाल राजा द्रष्टव्यः ’। स आह ‘ किं ते राज्ञा कार्यम् ’ ? सा चाह– ‘ न तेऽभिधास्यामि, नृपाय एव कथयामि ’। स सभायामागत्य प्राह– ‘ देव, कुम्भकारप्रिया काचिद्राज्ञो दर्शनाकाङ्क्षिणी न वक्ति मत्पुरतः कार्यम्, त्वत्पुरतः कथयिष्यति ’। राजा– ‘ प्रवेशय ’। सा चागत्य नमस्कृत्य वक्ति—

‘ देव, मृत्खननाद्दृष्टं निधानं वल्लभेन मे।
स पश्यन्नेव तत्रास्ते त्वां ज्ञापयितुमभ्यगाम् ॥८॥

राजा च चमत्कृतो निधानकलशमानयामास। तद्द्वारमुद्घाट्य

---

१ एकवचनेन अनादरेणेत्यर्थः; २ केवलं पाठपराणाम्, ३ महिषः.

यावत्पश्यति राजा तावदन्तर्वर्तिद्रव्यमणिप्रभामण्डलमालोक्य कुम्भकारं पृच्छति– 'किमेतत्कुम्भकार'? स चाह—

राजचन्द्रं समालोक्य त्वां तु भूतलमागतम्।
रत्नश्रेणिमिषान्मन्ये नक्षत्राण्यभ्युपागमन् ॥९॥

राजा कुम्भकारमुखाच्छ्लोकं लोकोत्तरमाकर्ण्य चमत्कृतस्तस्मै सर्वं ददौ।

अन्यदा राजा मृगयारसेनाटवीमटंल्ललाटंतपे तपने द्यूनदेहः पिपासापर्याकुलस्तुरगमारुह्योदकार्थी निकटतटभुवमटंस्तदलब्ध्वा परिश्रान्तः कस्यचिन्महातरोरधस्तादुपविष्टः। तत्र काचिद्गोपकन्या सुकुमारमनोज्ञसर्वाङ्गा यदृच्छया विक्रेतुकामा तक्रभाण्डं चोद्वहन्ती समागच्छति। तामागच्छन्तीं दृष्ट्वा राजा पिपासावशादेतद्भाण्डस्थं पेयं चेत्पिबामीति बुद्ध्यापृच्छत् 'तरुणि, किमावहसि?' इति। सा च तन्मुखश्रिया भोजं मत्वा तत्पिपासां च ज्ञात्वा तन्मुखावलोकनवशाच्छन्दोरूपेणाह—

हिमकुन्दशशिप्रभशङ्खनिभं परिपक्वकपित्थसुगन्धरसम्।
युवतीकरपल्लवनिर्मथितं पिब हे नृपराज रुजापहरम् ॥१०॥

ततः सन्तुष्टो राजा तां स्वकन्येति स्वीकृतवान्।

एकदा नर्मदायां महाह्रदे जालकैरेकः शिलाखण्ड ईषद्भ्रंशिताक्षरः कश्चिद्दृष्टः। तैश्च परिचिन्तितम्– इदमत्र लिखितमिव किञ्चिद्भाति। नूनमिदं राजनिकटं नेयम्' इति बुद्ध्या भोजसदसि समानीतम्। तदाकर्ण्य भोजः प्राह— 'पूर्वं भगवता हनूमता रामायणं कृतम्, तदत्र ह्रदे प्रक्षेपितमिति श्रुतमस्ति। ततः किमिदं लिखितमित्यवश्यं विचार्यमिति लिपिज्ञानं कार्यम्'। जतुपरीक्षयाक्षराणि परिज्ञाय पठति। तत्र चरणद्वयमानुपूर्व्याल्लब्धम्—

'अयि खलु विषमः पुरा कृतानां
भवति हि जन्तुषु कर्मणां विपाकः'।

ततो भोजः प्राह- 'एतस्य पूर्वार्धं कथ्यताम्' इति। तदा भवभूतिराह-

क्व नु कुलमकलङ्कमायताक्ष्याः
क्व नु रजनीचरसंगमापवादः। अयि खलु......

ततो भोजस्तत्र ध्वनिदोषं मन्वानस्तदेव पूर्वार्धमन्यथा पठति स्म—

क्व जनकतनया क्व रामजाया
क्व दशकन्धरमन्दिरे निवासः। अयि खलु......

ततो भोजः कालिदासं प्राह— त्वमपि कविहृदयं पठ' इति।
स आह— शिवशिरसि शिरांसि यानि रेजुः
शिव शिव तानि लुठन्ति गृध्रपादे।
अयि खलु विषमः पुरा कृतानां
भवति हि जन्तुषु कर्मणां विपाकः।

ततस्तस्य शिलाखण्डस्य पूर्वपुटे जतुशोधनेन कालिदासपठितं तमेव दृष्ट्वा राजा भृशं तुतोष।

**प्रश्नाः**— (१) सभायां कीदृशः कालिदासः प्रविवेश? (२) अमात्यः कुविन्दं किमिति गृहान्निःसारयितुं प्रवृत्तः, अन्ते च किमभूत्? (३) कुम्भकारः रत्नेषु किमुत्प्रेक्षते? (४) भोजविषयिणीमन्यामेकां कथां लिखत (५) कुतः कालिदासः सर्वेषु कविषु श्रेष्ठः? (६) त्रिषु पूर्वार्धेषु तारतम्यं विवेचयत।

---

# १६ पुण्यश्लोकः शिवभूपः

**परिचयः**— अम्बिकादत्तव्यासनामा वङ्गीयः कविः शिवराजविजयनामकं गद्यं शिवभूपचरित्रमस्यामेव शताब्द्यां रचितवान्। तस्य शिवराजविजयस्य प्रथमविरामीये प्रथमे द्वितीये तृतीये च निश्वासे विकीर्णं यत् **पुण्यश्लोकस्य शिवभूपस्य** वर्णनं तदत्र पाठे संकलितं वर्तते। तस्यैव द्वितीये विरामे षष्ठे निश्वासे माल्यश्रीकेण नाम वीरेण योगिवेषधारिणा भारतवर्षस्य तदानींतना दुरवस्था भगवति करुणासागरे विश्वंभरे निवेदिता, प्रार्थितश्च भगवान् ततः जनान् रक्षितुम्, स भागोऽपि अन्ततः उपहारीकृतः। अद्यत्त्वेऽपि संस्कृतभाषायां नूतनप्रबन्धग्रथनं भवति। यथा प्राचीनान् पौराणिकान् विषयांस्तथैव ऐतिहासिकान् सामाजिकान् च सांप्रतिकान् अपि विविधविषयान् शास्त्रीयया ललितया च प्रणाल्या आविष्कर्तुं सर्वथा अलंभवित्री भाषेयमिति विदांकुर्वन्तु पाठकमहोदयाः इत्यस्य संकलने गूढाकूतम्।

दक्षिणदेशो हि पर्वतबहुलोऽस्त्यरण्यानीसङ्कुलश्चास्तीति चिरोद्योगेनापि [1]नायमशकन्महाराष्ट्रकेसरिणो [2]हस्तयितुम्। साम्प्रतमस्यैवाऽऽत्मीयो दक्षिणदेशशासकत्वेन "शास्तिखाननामा" प्रेष्यत इति श्रूयते। महाराष्ट्रदेशरत्नं, यवनशोणितपिपासाऽऽकुलकृपाणः, वीरतासीमन्तिनीसीमन्तसुन्दरसान्द्रसिन्दूरदानदेदीप्यमानदोर्दण्डः, मुकुटमणिर्महाराष्ट्राणां, भूषणं भटानां, निधिर्नीतीनां, कुलभवनं कौशलानां, पारावारः परमोत्साहानां, कश्चन प्रातःस्मरणीयः, स्वधर्माऽऽग्रहग्रहिलः, शिव इव धृतावतारः शिव-

---

१ अयम् औरंगजेबः, २ हस्तसात्कर्तुम्.

वीरश्चास्मिन् पुण्यनगरान्नेदीयस्येव सिंहदुर्गे ससेनो निवसति। विजयपुराधीश्वरेण साम्प्रतमस्य प्रवृद्धं वैरम्। "कार्यं वा साधयेयं देहं वा पातयेयम्" इत्यस्य सारगर्भा महती प्रतिज्ञा। सतीनां, सतां, धर्मस्य, भारतवर्षस्य चाऽऽशासन्तानवितानस्यायमेवाश्रयः।

शिववीरस्तु कस्याञ्चिच्चन्द्रचुम्बिन्यां, सान्द्रसुधासारसंलिप्त-भित्तिकायां, धूपधूपितायां, गजदन्तिकावलम्बितविविधच्छुरिका-खड्गरिष्टिकायां, सुवर्णपिञ्जरपरिलम्बमानशुकपिकचकोर-सारिकाकलकूजितपूजितायामट्टालिकायां, संध्यामुपास्योपविष्ट आसीत्। परितश्च तस्यैव खर्वामप्यखर्वपराक्रमां, श्यामामपि यशःसमूहश्वेतीकृतत्रिभुवनां, कुशासनाश्रयामपि सुशासनाश्रयां, पठनपाठनादिपरिश्रमानभिज्ञामपि नीतिनिष्णातां, स्थूलदर्शनामपि सूक्ष्मदर्शनां, हत्याकाण्डव्यसनिनीमपि धर्मधौरेयीं, कठिनामपि कोमलाम्, उग्रामपि शान्तां, शोभितविग्रहामपि दृढसन्धिबन्धां, कलितगौरवामपि कलितलाघवां, विशालललाटां प्रचण्डबाहु-दण्डां, शोणापाङ्गां, कम्बुग्रीवां, सुनद्धस्नायुं, वर्तुलश्यामश्मश्रूं, धारिताकृतिमिव वीरतां, विग्रहिणीमिव धीरतां, समासादितसमर-स्फूर्ति मूर्ति दर्शं दर्शं परं प्रसादमासादयन्तश्च वयस्याः कटानध्य-वसन्।

स एव राजनीतीनिष्णातः, स एव सैन्धवारोहविद्यासिन्धुः, स एव चन्द्रहासचालने चतुरः, स एव मल्लविद्यामर्मज्ञः, स एव पण्डितमण्डलमण्डनः, स एव बाणविद्यावारिधिः, स एव धैर्य-धारिधौरेयः, स एव वीरवारवरः, स एव पुरुषपौरुषपरीक्षकः, स एव दीनदुःखदावदहनः, स एव स्वधर्मरक्षणसक्षणः, स एव विलक्षणविचक्षणः, स एव च मादृशगुणिगणगुणग्रहणाऽऽग्रही वर्तते।

## पाहि पाहि भगवन् पाहि

हन्त भगवन्, महति दुराचारे प्रवृत्तेऽवतरामीति प्रतिज्ञातवानसि। तत्किमितोऽप्यधिकं दुराचारमपेक्षसे? अहह!! परःकोटयो मूर्तयो भज्यन्ते, असंख्यानि मन्दिराणि भूमिसात्क्रियन्ते, राशीकृतानि वेदादिपुस्तकानि ज्वालाजालैर्ज्वल्यन्ते, कुलीनानामपि कन्यकाः कदर्य्यहतकैः कुत्सिताभिप्रायेण बलादाच्छिद्यन्ते। शिरश्च्छेदानां, नयनोत्पाटनानां, करकर्तनानां, जिह्वाकर्षणानां, उदरविदारणानां, शूलारोपणानाञ्च क्रीडा इव क्रियन्ते। याः प्रजाः पूर्वं राजभिरौरसप्रजा इव प्राणाधिकप्रेम्णा समपाल्यन्त, ता अधुना निरर्थं, निर्दयं लुठ्यन्ते, पात्यन्ते, घात्यन्ते, ज्वल्यन्ते च। अहह! नाधुनापि तव हृदये दया सञ्चरति?। भगवन् किमिति दीनबन्धुपदेन सम्बोध्यसे? यासां भारतीयप्रजानां दीनतामवलोक्य ग्रावाणोऽपि रुदन्ति; तासामुपरि करुणामयीं दृष्टिमपि न क्षिपसि! हन्त कियच्छयिष्यसे? अहह अस्माकं महाक्रन्दनकोलाहलैरपि न विद्राव्यते तव निद्रा? हा तवापि कथं व्यामोहः? गरलं तु धूर्जटिना पीतम्, मधु च दानवैरास्वादि, किन्तु चित्रं यद्, एष विलक्षणस्त्वयि दृश्यते व्यामोहः। त्वं हि राजतप्रासादो वा, क्षीरसागरो वा, दन्तिदन्तपर्यङ्को वा, कुण्डलितानन्तभोगाऽऽभोगो वा इति किमपि न वेवेक्षि[१]। अगणितफणावलिफूत्कृतैरिव वीज्यमानविमलकमलोदरसोदरसौन्दर्याभ्यां कमलकोमलकमलाकरतलाभ्यां पादयोः पीड्यमानः निःशङ्कं तस्मिन्नेव कोमलतमवेषे शेषे शेषे। तत्किं जगतः शेषे तव निद्रया भङ्क्ष्यते? अथवा तस्यैव महागरलस्य महा-

१ विचारयसि, विज्‌धातोः तृतीयगणीयस्य वर्तमाने रूपम्.

मद्यस्य च भगिन्या कनकाङ्गिन्या समालिङ्गित इति पन्नगकुल-मूलस्य शेषनागस्य गरलावलीढैर्निश्वासैः प्रतिरोमकुहरं रञ्जित इति च कलयसि काञ्चन मूर्च्छां, मत्ततां च। कथमन्यथा क्षीरबिवेष्टित एव क्षीरधिकन्यया रमेथाः? किं तु मैवम्, क्षमस्वैनाम-नल्पजल्पकल्पनाम्, सर्वत्रैवासि, सर्वान्पश्यसि, सर्वं वेत्सि, सर्वेषु दयसे इति सन्त्यत्र परःसहस्राणां प्रामाणिकानां वचनानि। येषु विश्वस्य तव सत्ताऽङ्गीक्रियते, कथं तेष्वेव विश्वस्य तवेदृग्गुणिता नाङ्गीकरिष्यते। परमहह! पश्यन्नपि विदन्नपि न दयसे, हन्त! किं कथ्यते? जगदीश्वरोऽसि। तत्किं गजोद्धारधावनस्थगितोऽसि? यन्न धावसि, विप्रावणहननवनवासव्रीडितोऽसि? यन्नावतरसि, कंसच्छेदनायासस्मरणेन वा तूष्णीकोऽसि? चिरन्तन इति वली-पलितविग्रहो वा सम्पन्नोऽसि, न ज्ञायते तत्त्वम्। यादृशस्त्वं तादृशमेव त्वां नमस्कुर्मः।

प्रभो, दयस्व, कदा तव कौमोदकी मोदं जनयिष्यति? कदा तव चापस्तापं विलयं यापयिष्यति? कदा तव नन्दको नन्दयिष्यति? कदा तव चक्रं दुष्टचक्रं चङ्क्रमिष्यते? मा स्मास्मदपराधान् स्मार्षीः। पाहि पाहि भगवन्! पाहि!

**प्रश्नाः**—(१) कीदृशः पुण्यश्लोकः शिवभूपः? (२) कविः भगवन्तं किमाक्रोशति कुतश्च? (३) नूत्नं संस्कृतप्रबन्धान्तरं परिचाययत।

# १७ उत्तमः प्रथमश्च सः

**परिचयः**— सोमदेवसूरिः नाम पण्डितः कविः क्रिस्ताब्दस्य दशमैकादशशतकाभ्यन्तरे संबभूव । अयं च यशोधरमहाराजचरितापरनामधेयं यशस्तिलकचम्पूकाव्यमरीरचत् । ग्रन्थस्य द्वितीये आश्वासे कविश्चरितनायकस्य यशोधरमहाराजस्य पितरं यशोर्घं नाम राजानं वर्णयति । तत्रत्यः कश्चन वर्णनाप्रकारः पाठेऽत्र संगृहीतः वर्तते ।

कवेरस्य रचनाशैली विविधालङ्कारमण्डिता बहुतरसमासगुम्फिता प्रतिभाविलासविलसिता हृद्यकल्पनापरिप्लाविता च वर्तते इत्यत्र पाठस्यास्यास्वादादनन्तरं रसिका एव प्रमाणम् ।

**येन व्यधायि द्वयमेव राज्ञा सुदुर्लभं प्रार्थितकामदेन ।**
**त्यागार्थिनां यावदयं जनोऽर्थी [1]शौण्डीरशद्वः क्षितिपान्तरेषु**

**यस्मै सच्चरित्रपवित्रकीर्तिकौमुदीसमासादितप्रीतिप्रसरः सर्वस्वमिव स्थैर्यं मन्दरः, सरित्पतिर्गाम्भीर्यम् , अमरगुरुरैतिह्यरहस्यं सुरतरुः सेव्यत्वम्, अवनिः क्षान्तिम्, सरस्वती सिद्धिं[2] वाचि, लक्ष्मीर्निदेशकर्मणि, चिन्तामणिर्मनसि, कुलदेवी वपुषि, वैवस्वतः सकलजनवश्यतायाम्, एवमन्येऽपि वरुणवैश्रवणप्रभृतयः कुलधनानीव स्वभागधेयानि स्पर्शयामासुः ।**

**यस्मै प्रजापालनवर्णभाजे ददुः सुराः स्वांशममी नृपाय ।**
**ऐश्वर्यमिन्द्रस्तपनः प्रतापं कलाः कलावांश्च बलं बलालः[3] ॥१॥**

---

१ वीरशद्वः, २ सिद्धिमिति उत्तरत्र सप्तम्यन्तैः संबध्यते, ३ परमात्मा.

यस्मादभूदयं लोकश्चतुर्वर्गफलोदयः ।
अन्यायभुजगाभोगगारुत्मतमणेर्नृपात् ॥२॥

नभोभूभोगिलोकार्हैः स्रोतोभिर्भुवनत्रये ।
ततान भूभृतो यस्मात् कीर्तिस्त्रिपथगापगा ॥३॥

यस्मात्पूर्वे परे भूपा न गुणैरतिशिश्रियरे ।
मध्यमोऽपि स्मृतस्तेषामुत्तमः प्रथमश्च सः ॥४॥

अन्य एवाचलः कश्चिदेष नूनं महीपतिः ।
प्रबभूव परं यस्माल्लक्ष्म्या सह सरस्वती ॥५॥

यस्मादशेषगुणरत्ननिधेर्महीशादेते गुणा जगति पप्रथिरे महान्तः
शौर्यं हरावसरधेनुषु कामदत्वं गाम्भीर्यमम्बुधिषु भास्वति च प्रताप

यस्य शराभ्यासावसरेषु बहुमुष्टिता न वसुविश्राणनेषु, पत्रभङ्गे
भुजगता न हृषीकविलसितेषु, भूषणेषु विकृतिदर्शनं न मनोविजृ
म्भितेषु, मदगजेषु परप्रणेयता न कार्यानुष्ठानेषु, विलासिनीगति
स्खलितता न प्रतापेषु, करिकर्णेषु चपलता न कर्मारम्भेषु ।

पातालवेलावनवारिवासविश्वंभराभूद्भ्रमणाच्चिराय ।
खिन्नेव कीर्तिः क्षितिपस्य यस्य विश्राम्यति स्म त्रिदिवालयेषु ।

यस्मिन्दिग्जैत्रयात्राकृतकुतूहले च बभूवुर्महावाहिन्यः संध्याचमन
कुल्या इव, वेलावनानि पुष्पावचयभूमय इव, पयोधयो जलकेलि
दीर्घिका इव, द्वीपान्तराणि प्रतिवेशनिवेशा इव, कुलशिखरिण
क्रीडाचला इव, दिक्पालभवनान्युपकार्या इव, ककुप्कुम्भिस्तम्भा
प्रशस्तिशिला इव ।

यस्मिन्महीं शासति भूमिनाथे बभूवुरल्पे किल कल्पलोकाः ।
मनीषितावाप्तमनोरथानां स्वर्गाय यस्मान्न मनः प्रजानाम् ॥

प्रश्नाः— (१) यशोघे राजनि किं किं दुर्लभं कुतः च ? (२) 'मध्यमोऽपि स्मृतस्तेषामुत्तमः प्रथमश्च सः' इत्यत्र कः कल्पनाविशेषः ? (३) तस्य राज्ये क्व किमासीत् किं च नासीत् । (४) तस्मै राज्ञे के के किं किं दत्तवन्तः ?

---

# १८ बुद्धिस्तु मा गान्मम

**परिचयः**— संस्कृतभाषायामुपलब्धानि नाटकानि 'नाटकं ख्यातवृत्तं स्यात्' इति मर्यादानुरोधेन प्रायो रामायणमहाभारतादिषु काँश्चन् विशेषप्रसङ्गानाश्रित्यैव लिखितानि दृश्यन्ते । ऐतिहासिकान् सामाजिकान् वा प्रसङ्गानधिकृत्य गीर्वाणवाण्यां प्राचीनैर्नाटककारैर्विरचितानि नाटकानि कराङ्गुलिपरिमितान्यपि संभवेयुर्न वेति विषयेऽपि सन्देह एवेति वचो नात्युक्तिमावहति ।

चन्द्रगुप्तस्य राज्याधिगमादनन्तरं चाणक्यस्य, नन्दामात्यस्य राक्षसस्य च राजनीतिप्रयोगप्रदर्शयितृ नाटकमेकं कविना विशाखदत्तेन विरचितं विद्यते । विशाखदत्तस्तु क्रिस्ताब्दस्य षष्ठे शतके चरमचरणे सञ्जात इति विज्ञायते ।

'नन्दान्तं क्षत्रियं कुलम्' इत्याभाणकवशात् क्रिस्ताब्दात् पूर्वं प्रायः त्रिशतवर्षाणि धनानन्दाख्यस्य नन्दवंशीयस्य राज्ञो मुराख्याया अनभिषिक्ताया अपि महिषीभावमापन्नाया राज्ञ्याः सुतश्चन्द्रगुप्त एव मातृनामतो मौर्यवंशीयः प्रथमश्चक्रवर्ती भूपो बभूव । यत्किलानेन चक्रवर्तित्वमासादितं तत्रास्यासामान्यशौर्यवीर्योत्साहदयादाक्षिण्यानिरलसत्वप्रजानुरञ्जनौत्कण्ठ्यादयो गुणाः कारणं, किन्तु चाणक्यसाहाय्येन एव अस्य प्रयत्नाः सफला बभूवुः इत्यत्र सर्वेषामपि विदुषां विमतिर्नास्ति । नितरामभिमानी चाणक्यः नन्दानां विना-

शैनैव स्वापमानशल्यमुद्धर्तुं सर्वसमक्षं प्रतिज्ञाय तं प्रतिज्ञासगरं कथमतरदित्ययमितिहासो विश्वविश्रुत एव।

स्वप्रतिज्ञानुसारं नन्दवंशवधं विधाय चन्द्रगुप्ताय च राज्यं समर्प्य चाणक्यः नन्दामात्येन राक्षसेन चन्द्रगुप्तस्य साचिव्यं ग्राहयित्वैव प्रतिज्ञाया अवशिष्टं भागं कथं पूरयामासेति कथावृत्तमस्मिन्नाटके कविस्तथा संजग्रन्थ यथा चाणक्यराक्षसयोस्ताँस्तान् राजनीतिप्रयोगाभियोगान् तत्परिणामांश्च ज्ञातुं नितरां समुत्कण्ठते सहृदयः।

मुद्राराक्षसस्य प्रथमाङ्कात् समुद्धृतोऽयं परिच्छेदः। स्वगृहजनान् चन्दनदासस्य गृहे एव निगूढं स्थापयित्वा नन्दान्वयस्य राज्ये प्रतिष्ठापनार्थं प्रवर्तमानस्य राक्षसस्य निग्रहार्थं चाणक्यः प्रथमं चन्दनदासमेव निगृह्णाति। अत्र परिच्छेदे **बुद्धिस्तु मा गान्मम** इति वचसा स्वबुद्धावेव दृढं विश्वसतः, चन्दनदासेन सह संभाषणे तु आपाततः कृतकं कोपं प्रदर्श्यापि हृदयेन तद्गुणानेव प्रशंसतः चाणक्यस्य गुणग्राहकत्वं मनुष्यस्वभावपरीक्षणकौशल्यादयो गुणाः प्रतीयन्ते। चन्दनदासनिग्रहेणैव राक्षसनिग्रहस्य बीजमुपक्षिपतः कवेर्विशाखदत्तस्य नाट्यरचनाचातुर्यमनन्यसाधारणं विद्यते।

तमेतं चाणक्यचन्दनदासयोः संवादं पठित्वा 'मुद्राराक्षस' इति नाम्नो यथार्थतां ज्ञातुं कृतधियो रसिकाश्छात्रा स्वयमेव मुद्राराक्षसं नाटकं पठेयुरिति दृढं विश्वसिमः।

**चाणक्यः**– वत्स, मणिकारश्रेष्ठिनं चन्दनदासमिदानीं द्रष्टुमिच्छामि।

**शिष्यः**– यदाज्ञापयत्युपाध्यायः (निष्क्रम्य चन्दनदासेन सह पुनः प्रविश्य) इत इतः श्रेष्ठिन्।

**चन्दनदासः**– (स्वगतम्)

**चाणक्ये अकरुणे सहसा शब्दायितस्यापि जनस्य।**
**निर्दोषस्यापि शङ्का किं पुनर्मम जातदोषस्य॥१॥**

तस्माद्धाणिता मया धनसेनप्रमुखा निजनिवेशसंस्थिताः कदापि चाणक्य-हतको गेहं विचिनोति। तस्मादवाहिता निर्वहत भर्तुरमात्यराक्षसस्य गृह-जनम्। मम तावद्यद्भवति तद्भवत्विति।

**शिष्यः—** भोः श्रेष्ठिन्, इत इतः।

**चन्दनदासः—** अयमागच्छामि। ( उभौ परिक्रामतः )

**शिष्यः—** ( उपसृत्य ) उपाध्याय, अयं श्रेष्ठी चन्दनदासः।

**चन्दनदासः—** जयतु आर्यः।

**चाणक्यः—** ( नाट्येनावलोक्य ) श्रेष्ठिन्, स्वागतम्। इदमासनमास्यताम्।

**चन्दनदासः—** किं न जानात्यार्यः यथानुचित उपचारो हृदयस्य परिभवा-दपि दुःखमुत्पादयति। तस्मादिहैवोचितायां भूमावुपविशामि।

**चाणक्यः—** भोः श्रेष्ठिन्, मा मैवम्। संभावितमेवेदमस्मद्विधैः भवतः। तदुपविश्यतामासन एव।

**चन्दनदासः—** ( स्वगतम् ) उपक्षिप्तमनेन दुष्टेन किमपि। ( प्रकाशम् ) यदार्य आज्ञापयति। ( उपविष्टः )

**चाणक्यः—** भोः श्रेष्ठिन् चन्दनदास, अपि प्रचीयन्ते संव्यवहाराणां वृद्धि-लाभाः !

**चन्दनदासः—** ( स्वगतम् ) अत्यादरः शङ्कनीयः। ( प्रकाशम् ) अथ किम्? आर्यस्य प्रसादेन अखण्डिता मे वाणिज्या।

**चाणक्यः—** न खलु चन्द्रगुप्तदोषा अतिक्रान्तपार्थिवगुणानधुना स्मारयन्ति प्रकृतीः।

**चन्दनदासः—** ( कर्णौ पिधाय ) शान्तं पापम्। शारदनिशासमुद्गतेनेव पूर्णिमाचन्द्रेण चन्द्रश्रियाधिकं नन्दन्ति प्रकृतयः।

**चाणक्यः—** भोः श्रेष्ठिन्, यद्येवं, प्रीताभ्यः प्रकृतिभ्यः प्रतिप्रियमिच्छन्ति राजानः।

**चन्दनदासः—** आज्ञापयतु आर्यः किं कियदस्माज्जनादिष्यते इति.

**चाणक्यः**— भोः श्रेष्ठिन्, चन्द्रगुप्तराज्यमिदं न नन्दराज्यम्। यतो नन्दस्यैवार्थरुचेरर्थसम्बन्धः प्रीतिमुत्पादयति। चन्द्रगुप्तस्य तु भवतामपरिक्लेश एव।

**चन्दनदासः**— ( सहर्षम् ) आर्य अनुगृहीतोऽस्मि।

**चाणक्यः**— भोः श्रेष्ठिन्, स चापरिक्लेशः कथमाविर्भवतीति ननु भवता प्रष्टव्याः स्मः।

**चन्दनदासः**— आज्ञापयतु आर्यः।

**चाणक्यः**— संक्षेपतो राजनि अविरुद्धाभिर्वृत्तिभिर्भवितव्यम्।

**चन्दनदासः**— आर्य, कः पुनरधन्यो राज्ञा विरुद्ध इति आर्येणावगम्यते ?

**चाणक्यः**— भवानेव तावत्प्रथमम्।

**चन्दनदासः**— ( कर्णौ पिधाय ) शान्तं पापं, शान्तं पापम्। कीदृशस्तृणानामग्निना सह विरोधः ?

**चाणक्यः**— अयमीदृशो विरोधः। यस्त्वमद्यापि राजापथ्यकारिणोऽमात्यराक्षसस्य गृहजनं स्वगृहमभिनीय रक्षसि।

**चन्दनदासः**— आर्य, अलीकमेतत्केनाप्यनभिज्ञेन आर्यस्य निवेदितम्।

**चाणक्यः**— भोः श्रेष्ठिन्, अलमाशङ्कया। भीताः पूर्वराजपुरुषाः पौराणामनिच्छतामपि गृहेषु गृहजनं निक्षिप्य देशान्तरं व्रजन्ति। ततस्तत्प्रच्छादनं दोषमुत्पादयति।

**चन्दनदासः**— एवं नु इदम्। तस्मिन् समये आसीदस्मद्गृहे अमात्यराक्षसस्य गृहजन इति।

**चाणक्यः**— पूर्वमनृतमिदानीमासीदिति परस्परविरोधिनी वचने।

**चन्दनदासः**— एतावदस्ति मे वाक्छलम्।

**चाणक्यः**— भोः श्रेष्ठिन् चन्द्रगुप्ते राजन्यपरिग्रहः छलानाम्। तत्समर्पय राक्षसस्य गृहजनम्। अच्छलं भवतु भवतः।

**चन्दनदासः**— आर्य, ननु विज्ञापयामि तस्मिन् समये आसीदस्मद्गृहे अमात्यराक्षसस्य गृहजनः इति।

**चाणक्यः**— अथेदानीं क्व गतः ?

**चन्दनदासः**— न जानामि ।

**चाणक्यः**— ( स्मितं कृत्वा ) कथं न ज्ञायते नाम । भोः श्रेष्ठिन्, शिरसि भयम्, अतिदूरे तत्प्रतीकारः अन्यच्च, नन्दमिव विष्णुगुप्तः— ( इत्यर्धोक्ते लज्जां नाटयित्वा ) चन्द्रगुप्तममात्यराक्षसः समुच्छेत्स्यतीति मा मैवं मंस्थाः । पश्य——

**विक्रान्तैर्नयशालिभिः सुसचिवैः श्रीर्वक्रनासादिभिः ,**
**नन्दे जीवति या तदा न गमिता स्थैर्यं चलन्ती मुहुः ।**
**तामेकत्वमुपागतां द्युतिमिव प्रह्लादयन्तीं जगत्,**
**कश्चन्द्रादिव चन्द्रगुप्तनृपतेः कर्तुं व्यवस्येत् पृथक् ॥२॥**

**चन्दनदासः**— ( स्वगतम् ) फलेन संवादितमस्य विकत्थितम् । ( नेपथ्ये कलकलः )

**चाणक्यः**— शार्ङ्गरव, ज्ञायतां किमेतत् ?

**शिष्यः**— तथा । ( इति निष्क्रम्य, पुनः प्रविश्य ) उपाध्याय, एष राज्ञश्चन्द्रगुप्तस्याज्ञया राजापथ्यकारी क्षपणको जीवसिद्धिः सनिकारं नगरान्निर्वास्यते ।

**चाणक्यः**— क्षपणक, अहह । अथवा अनुभव राजापथ्यकारित्वस्य फलम् । भोः श्रेष्ठिन् चन्दनदास, एवमयमपथ्यकारिषु तीक्ष्णदण्डो राजा । तत्क्रियतां पथ्यं सुहृद्वचः । समर्प्यतां राक्षसगृहजनः । अनुभूयतां चिरं विचित्रो राजप्रसादः ।

**राक्षसः**— नास्ति मे गेहे अमात्यगृहजनः । ( नेपथ्ये पुनः कलकलः )

**चाणक्यः**— शार्ङ्गरव, ज्ञायतां पुनः किमेतत् ।

**शिष्यः**— तथा ( इति निष्क्रम्य पुनः प्रविश्य ) अयमपि राजापथ्यकार्येव कायस्थः शकटदासः शूलमारोपयितुं नीयते ।

**चाणक्यः**— स्वकर्मफलमनुभवतु । भोः श्रेष्ठिन् एवमयं राजापथ्यकारिषु तीक्ष्णदण्डो न मर्षयिष्यति राक्षसकलत्रप्रच्छादनं भवतः । तद्रक्ष परकलत्रेणात्मनः कलत्रं जीवितं च ।

**चन्दनदासः**— आर्य, किं मे भयं दर्शयसि ? सन्तमपि गेहे अमात्यराक्षसस्य गृहजनं न समर्पयामि किं पुनरसन्तम् !

**चाणक्यः**— चन्दनदास, एष ते निश्चयः ?

**चन्दनदासः**— बाढम् । एष धीरो मे निश्चयः ।

**चाणक्यः**— ( स्वगतम् ) साधु चन्दनदास, साधु ।

**सुलभेष्वर्थलाभेषु परसंवेदने जने ।**
**क इदं दुष्करं कुर्यादिदानीं शिबिना विना ॥३॥**

( प्रकाशम् ) चन्दनदास, एष ते निश्चयः ?

**चन्दनदासः**— बाढम् ।

**चाणक्यः**— ( सक्रोधम् ) दुरात्मन्, तिष्ठ दुष्टवणिक् । अनुभूयतां तर्हि नरपतिक्रोधः ।

**चन्दनदासः**— सज्जोऽस्मि । अनुतिष्ठतु आर्यः आत्मनोऽधिकारसदृशम् ।

**चाणक्यः**— शार्ङ्गरव, उच्यतामस्मद्वचनात्कालपाशिको दण्डपाशिकश्च । शीघ्रमयं दुष्टवणिक् निगृह्यताम् । अथवा तिष्ठतु । उच्यतां दुर्गपालको विजयपालकः । गृहीतगृहसारमेनं सपुत्रकलत्रं संयम्य तावद्रक्ष यावन्मया वृषलाय कथ्यते । वृषल एवास्य प्राणहरं दण्डमाज्ञापयिष्यति ।

**शिष्यः**— यदाज्ञापयत्युपाध्यायः । श्रेष्ठिन्, इत इतः ।

**चन्दनदासः**— आर्य, अयमागच्छामि । ( स्वगतम् ) दिष्ट्या मित्रकार्येण मे विनाशो न पुरुषदोषेण । ( परिक्रम्य शिष्येण सह निष्क्रान्तः )

**चाणक्यः**— ( सहर्षम् ) हन्त, लब्ध इदानीं राक्षसः । कुतः—

**त्यजत्यप्रियवत्प्राणान्यथा तस्यायमापदि ।**
**तथैवास्यापदि प्राणा नूनं तस्यापि न प्रियाः ॥४॥**

( नेपथ्ये पुनः कलकलः )

**चाणक्यः**– शार्ङ्गरव, शार्ङ्गरव—

**शिष्यः**– ( प्रविश्य ) उपाध्याय, आज्ञापय।

**चाणक्यः**– किमेष कलकलः ?

**शिष्यः**– ( विभाव्य ) उपाध्याय एष खलु शकटदासं वध्यमानं वध्यभूमेरादाय समपक्रान्तः सिद्धार्थकः।

**चाणक्यः**– ( स्वगतम् ) साधु सिद्धार्थक, कृतः कार्यारम्भः। ( प्रकाशम् ) प्रसह्य किमपक्रान्तः ? ( सक्रोधम् ) वत्स उच्यतां भागुरायणो यथा त्वरितं संभावयेति।

( निष्क्रम्य प्रविश्य च )

**शिष्यः**– उपाध्याय, हा धिक् कष्टम्। अपक्रान्तो भागुरायणोऽपि।

**चाणक्यः**– ( स्वगतम् ) व्रजतु कार्यसिद्धये। ( प्रकाशं सक्रोधमिव ) वत्स, उच्यन्तामस्मद्वचनाद्भद्रभटपुरुषदत्तडिङ्गरातबलगुप्तराजसेनरोहिताक्षविजयवर्माणः शीघ्रमनुसृत्य गृह्यतां दुरात्मा भागुरायणः।

**शिष्यः**– तथा ( इति निष्क्रम्य पुनः प्रविश्य सविषादम् ) हा धिक् कष्टम्। सर्वमेव तन्त्रमाकुलीभूतम्। तेऽपि खलु भद्रभटप्रभृतयः प्रथमतरमुषस्येवापक्रान्ताः।

**चाणक्यः**– ( स्वगतम् ) सर्वथा शिवाः पन्थानः सन्तु। ( प्रकाशम् ) वत्स, अलं विषादेन। पश्य

**ये याताः किमपि प्रधार्य हृदये पूर्वं गता एव ते,**
**ये तिष्ठन्ति भवन्तु तेऽपि गमने कामं प्रकामोद्यमाः।**
**एका केवलमेव साधनविधौ सेनाशतेभ्योऽधिका,**
**नन्दोन्मूलनदृष्टवीर्यमहिमा बुद्धिस्तु मा गान्मम ॥५॥**

— मुद्राराक्षसे प्रथमेऽङ्के

**प्रश्नाः**— (१) चाणक्यचन्दनदासयोः संभाषणं कथारूपेण निवेदयत। (२) राक्षसगृहजनरक्षणाय चन्दनदासेन क उपायः पूर्वमेव प्रयुक्तः? (३) चन्दनदासनिग्रहेण राक्षसनिग्रहः सुशक इति विचारे किं निदानम्? (४) चन्द्रगुप्तस्य तीक्ष्णदण्डवत्वं ज्ञापयितुं चाणक्येन क उपायाः चन्दनदासमुद्दिश्य प्रयुक्ताः? कश्च तेषां परिणामः? (५) ससन्दर्भमर्थं विशदयत— १. अच्छलं भवतु भवतः, २. अत्यादरः शङ्कनीयः, ३. कीदृशस्तृणानामग्निना सह विरोधः? ४. भोः श्रेष्ठिन् चन्द्रगुप्तराज्यमिदं न नन्दराज्यम्, ५. फलेन संवादितमस्य विकत्थनम्। (६) राक्षसचन्दनदासयोः सौहार्दं सोदाहरणं समर्थयत। (७) अत्र परिच्छेदे चाणक्यस्य कीदृशं बुद्धिवैभवं प्रतीयते?

---

# १९ हन्त! मण्डितः संसारः

**परिचयः**— विदर्भेषु पद्मपुरे नाम नगरे श्रीकण्ठनामा कविः क्रिस्ताब्दस्याष्टमे शतके जनुर्लेभे। स एव 'भवभूति' नाम्ना प्रसिद्धिं गतः। अयं कविः कनोजाधिपतेः यशोवर्मणः सभायां राजकविरासीत्। महावीरचरितं नाम भगवतो रामचन्द्रस्य पूर्वचरिताश्रयं नाटकमेतेन विराचितम्। तथैव श्रीरामस्य उत्तरचरिताश्रयम् 'उत्तररामचरितं' नाम नाटकं विरच्य, यत्सत्यं, सकलापि नाट्यसृष्टिरनेन चिरं मण्डिता। 'उत्तरे रामचरिते भवभूतिर्विशिष्यते' इति विदुषां रसिकानां प्रवादोऽपि अमुमेवार्थं समर्थयते।

'मालतीमाधवं' नाम प्रकरणमपि अनेन विरचितं रसिकानां मनोरञ्जनाय सुतरामलं भवेत् ।

अत्र च पाठे उत्तररामचरितस्य द्वितीयाङ्कीयः विष्कम्भकः उद्धृतो वर्तते । विष्कम्भकः नाम अङ्कद्वयमध्ये कश्चन प्रवेशकः यत्र पूर्वोत्तराङ्क-कथयोः परस्परं सम्बन्धः प्रदर्शितो भवति ।

लोकापवादेनोद्विग्नः रामचन्द्रः स्वप्राणेभ्योऽपि प्रियां सतीं सीतामत्याक्षीत् । द्वादशवर्षादनन्तरं केनापि राजकार्येण सः पुनरपि दण्डकारण्यमागमत् । तत्सम्बन्धिनं कथांशं आत्रेयीवासन्तीसंवादेन कविरत्र तथा वर्णयति यथा निखिलोऽपि स वृत्तान्तः मूर्तिमापन्नः इव प्रत्यक्षगोचर इव प्रतिभाति । तत्रैव प्रसङ्गतः रामायणकाव्यप्रारम्भः, श्रीरामस्य सीताविषयकः अनन्य-साधारणः प्रेमा, ज्ञानवितरणे गुरूणां समानभावः, लोकोत्तराणां चेतोवृत्तिः, कठोरदिनवर्णना इत्यादयो नैके विषयाः अतीव हृदयहारिण्या सरण्या उप-निबद्धा वाचकानां वाङ्मयाभिरुचिं द्विगुणयन्ति ।

( नेपथ्ये ) स्वागतं तपोधनायाः ।

( ततः प्रविशत्यध्वगवेषा तापसी )

**तापसी**– अये वनदेवतेयं फलकुसुमगर्भेण पल्लवार्घ्येण दूरान्मामुपतिष्ठते ।

( प्रविश्य, अर्घ्यं विकीर्य )

**वनदेवता**– **यथेच्छं भोग्यं वो वनमिदमयं मे सुदिवसः**
**सतां सद्भिः संगः कथमपि हि पुण्येन भवति ।**
**तरुच्छाया तोयं यदपि तपसो योग्यमशनं**
**फलं वा मूलं वा तदपि न पराधीनमिह वः ।।१।।**

**तापसी**– किमत्रोच्यते ।

**प्रियप्राया वृत्तिर्विनयमधुरो वाचि नियमः**
**प्रकृत्या कल्याणी मतिरनवगीतः परिचयः ।**

पुरो वा पश्चाद्वा तदिदमविपर्यासितरसं
[1]रहस्यं साधूनामनुपधि विशुद्धं विजयते ॥२॥

( उपविशतः )

**वनदेवता–** कां पुनरत्रभवतीमवगच्छामि ।

**तापसी–** आत्रेय्यस्मि ।

**वनदेवता–** आर्ये आत्रेयि, कुतः पुनरागम्यते । किंप्रयोजनो वा दण्डकारण्यप्रवेशः ।

**आत्रेयी– अस्मिन्नगस्त्यप्रमुखाः प्रदेशे भूयांस [2]उद्गीथविदो वसन्ति। तेभ्योऽधिगन्तुं [3]निगमान्तविद्यां,वाल्मीकिपार्श्वादिह पर्यटामि ॥**

**वनदेवता–** यदा तावदन्येऽपि मुनयस्तमेव हि पुराणब्रह्मवादिनं प्राचेतसमृषिं ब्रह्मपारायणायोपासते तत्कोऽयमार्याया दीर्घप्रवासप्रयासः ?

**आत्रेयी–** तत्र महानध्ययनप्रत्यूह इत्येष दीर्घप्रबासोऽङ्गीकृतः ।

**वनदेवता–** कीदृशः ?

**आत्रेयी–** तस्य भगवतः केनापि देवताविशेषेण सर्वप्रकाराद्भुतं स्तन्यत्यागमात्रके वयसि वर्तमानं द्वारकद्वयमुपनीतम् । तत्खलु न केवलं ऋषीणामपि तु चराचराणां भूतानामान्तराणि[4] तत्त्वान्युपस्नेहयति ।

**वनदेवता–**अपि तयोर्नामसंविज्ञानमस्ति ?

**आत्रेयी–** तयैव किल देवतया तयोः कुशलवाविति नामनी प्रभावश्चाख्यातः ।

**वनदेवता–** कीदृशः प्रभावः ?

**आत्रेयी–** तयोः किल सरहस्यानि जृम्भकास्त्राण्याजन्मसिद्धानीति ।

**वनदेवता–** अहो नु भोश्चित्रमेतत् ।

**आत्रेयी–** तौ च भगवता वाल्मीकिना धात्रीकर्मतः परिगृह्य पोषितौ रक्षितौ च। निर्वृत्तचौलकर्मणोश्च तयोस्त्रयीवर्जमितरास्तिस्रो विद्याः सावधानेन

---

१ गूढचारितम्, २ वेदविदः, ३ तत्वज्ञानम्, ४ मनोबुद्ध्यादीनि.

परिनिष्ठापिताः। समनन्तरं च गर्भैकादशे वर्षे क्षात्रेण कल्पेनोपनीय गुरुणा त्रयीविद्यामध्यापितौ। न ह्येताभ्यामतिप्रदीप्तप्रज्ञामेधाभ्यामस्मदादेः सहाध्ययनयोगोऽस्ति। यतः

**वितरति गुरुः प्राज्ञे विद्यां यथैव तथा जडे**
**न तु खलु तयोर्ज्ञाने शक्तिं करोत्यपहन्ति वा।**
**भवति च तयोर्भूयान्भेदः फलं प्रति तद्यथा**
**प्रभवति शुचिर्बिम्बग्राहे मणिर्न मृदादयः ॥४॥**

**वनदेवता–** अयमसावध्ययनप्रत्यूहः।

**आत्रेयी–** अपरश्च।

**वनदेवता–** अथापरः कः ?

**आत्रेयी–** अथ स ब्रह्मर्षिरेकदा माध्यंदिनसवनाय नदीं तमसामनुप्रपन्नः। तत्र युग्मचारिणोः क्रौञ्चयोरेकं व्याधेन विध्यमानं ददर्श। आकस्मिकप्रत्यवभासां च देवीं वाचमव्यतिकीर्णामानुष्टुभेन छन्दसा परिणतामभ्युदैरयत्

**मा निषाद प्रतिष्ठां त्वमगमः शाश्वतीः समाः।**
**यत्क्रौञ्चमिथुनादेकमवधीः काममोहितम् ॥५॥**

**वनदेवता–** चित्रमाम्नायादन्यो नूतनश्छन्दसामवतारः।

**आत्रेयी–** तेन खलु पुनः समयेन तं भगवन्तमाविर्भूतशब्दब्रह्मप्रकाशमृषिमुपसंगम्य भगवान् भूतभावनः पद्मयोनिरवोचत्। —"ऋषे प्रबुद्धोऽसि वागात्मनि ब्रह्मणि तद्ब्रूहि रामचरितम्। अव्याहतज्योतिरार्षं ते प्रतिभाचक्षुः। आद्यः कविरसि"। इत्युक्त्वा तत्रैवान्तर्हितः। अथ स भगवान् प्राचेतसः प्रथमं मनुष्येषु शब्दब्रह्मणस्तादृशं विवर्तमितिहासं रामायणं प्रणिनाय।

**वनदेवता–** हन्त, तर्हि मण्डितः संसारः।

**आत्रेयी–** तस्मादवोचं तत्र हि महानध्ययनप्रत्यूह इति ।

**वनदेवता–** युज्यते ।

**आत्रेयी–** विश्रान्तास्मि भद्रे । सम्प्रत्यगस्त्याश्रमस्य पन्थानं ब्रूहि ।

**वनदेवता–** इतः पञ्चवटीमनुप्रविश्य गम्यतामनेन गोदावरीतीरेण ।

**आत्रेयी–** ( सास्रम् ) अप्येतत्तपोवनम् ? अप्येषा पञ्चवटी ? अपि सरिदियं गोदावरी ? अप्ययं गिरिः प्रस्रवणः ? अपि जनस्थानवनदेवता वासन्ती त्वम् ?

**वनदेवता–** तथैव तत्सर्वम् ।

**आत्रेयी–** हा वत्से, जानाकि,

**स एष ते वल्लभशाखिवर्गः प्रासङ्गिकीनां विषयः कथानाम् ।**
**त्वां नामशेषामपि दृश्यमानः प्रत्यक्षदृष्टामिव नः करोति ६**

**वासन्ती–** ( सभयम्, स्वगतम् ) कथं नामशेषामित्याह । ( प्रकाशम् ) आर्ये किमत्याहितं सीतादेव्याः ।

**आत्रेयी–** न केवलमत्याहितं सापवादमपि । ( कर्णे ) एवमेवम् ।

**वासन्ती–** अहह दारुणो दैवनिर्घातः । ( इति मूर्च्छति )

**आत्रेयी–** भद्रे, समाश्वसिहि, समाश्वसिहि ।

**वासन्ती–** हा प्रियसखि हा महाभागे, ईदृशस्ते निर्माणभागः । हा रामभद्र, अथवा अलं त्वया । आर्ये आत्रेयि, अथ तस्मादरण्यात्परित्यज्य निवृत्ते लक्ष्मणे सीतादेव्याः किं वृत्तम् इति काचिदस्ति प्रवृत्तिः ?

**आत्रेयी–** नहि नहि ।

**वासन्ती–** हा कष्टम् आर्यारुन्धतीवसिष्ठाधिष्ठितेषु रघुकदम्बकेषु जीवन्तीषु च प्रवृद्धासु राज्ञीषु कथमिदं जातम् ?

**आत्रेयी–** ऋष्यशृङ्गाश्रमे गुरुजनस्तदासीत् । सम्प्रति तु परिसमाप्तं तद्-द्वादशवार्षिकं सत्रम् । ऋष्यशृङ्गेण च सम्पूज्य विसर्जिता गुरवः । ततो भगवत्यरुन्धती नाहं वधूविरहितामयोध्यां गमिष्यामीत्याह । तदेव राम-

मातृभिरनुमोदितम् । तदनुरोधाद् भगवतो वसिष्ठस्य परिशुद्धा वाचो 'वाल्मीकितपोवनं गत्वा तत्र वत्स्याम' इति ।

**वासन्ती–** अथ स राजा किमाचारः सम्प्रति ?

**आत्रेयी–** तेन राज्ञा क्रतुरश्वमेधः प्रक्रान्तः ।

**वासन्ती–** हा धिक् ! परिणीतमपि ?

**आत्रेयी–** शान्तं पापम् । नहि नहि ।

**वासन्ती–** का तर्हि यज्ञे सहधर्मचारिणी ?

**आत्रेयी–** हिरण्मयी सीताप्रतिकृतिः ।

**वासन्ती–** हन्त भोः,

**वज्रादपि कठोराणि मृदूनि कुसुमादपि ।**
**लोकोत्तराणां चेतांसि को नु विज्ञातुमर्हति ॥७॥**

**आत्रेयी–** विसृष्टश्च वामदेवाभिमन्त्रितो मेध्योऽश्वः । उपकल्पिताश्च तस्य यथाशास्त्रं रक्षितारः । तेषामधिष्ठाता च लक्ष्मणात्मजश्चन्द्रकेतुरवाप्त-दिव्यास्त्रसम्प्रदायश्चतुरङ्गसाधनाऽन्वितोऽनुप्राहितः ।

**वासन्ती–** (सस्नेहकौतुकम्) कुमारलक्ष्मणस्यापि पुत्रः ! हन्त मातः जीवामि ।

**आत्रेयी–** अत्रान्तरे ब्राह्मणेन मृतं पुत्रमुत्क्षिप्य राजद्वारे सोरस्ताडमब्रह्मण्यमु-द्घोषितम् । ततो न राजापचारमन्तरेण प्रजास्वकालमृत्युः सञ्चरती-त्यात्मदोषं निरूपयति करुणामये रामभद्रे सहसैवाशरीरिणी वागुदचरत् ।

**शम्बूको नाम वृषलः पृथिव्यां तप्यते तपः ।**
**शीर्षच्छेद्यः स ते राम तं हत्वा जीवय द्विजम् ।**

इत्युपश्रुत्यैवाकृष्टकृपाणपाणिः पुष्पकं विमानमारुह्य सर्वा दिशो विदिशश्च शूद्रतापसान्वेषणाय जगत्पतिः सञ्चरितुमारब्धवान् ।

**वासन्ती–** शम्बूको नाम धूमपः शूद्रोऽस्मिन्नेव जनस्थाने तपश्चरति। तद् अपि नाम रामभद्रः पुनरपीदं वनमलङ्कुर्यात्?

**आत्रेयी–** भद्रे आगम्यतेऽधुना।

**वासन्ती–** आर्ये आत्रेयी एवमस्तु। कठोरीभूतस्तु दिवसः।

**कण्डूलद्विपगण्डपिण्डकषणाकम्पेन सम्पातिभिः**
**घर्मस्रंसितबन्धनैः स्वकुसुमैरर्चन्ति गोदावरीम्।**
**छायापस्किरमाणविष्किरमुखव्याकृष्टकीटत्वचः**
**कूजत्क्लान्तकपोतकुक्कुटकुलाः कूले कुलायद्रुमाः॥९॥**

**प्रश्नाः—** (१) केयं वासन्ती का चात्रेयी? (२) आत्रेयी किमिति दण्डकारण्यं संप्राप्ता? (३) तत्र वासन्ती किमिति विस्मयते? (४) को रामायणकथोद्गमः (५) 'लोकोत्तराणां चेतांसि' इत्यस्योपन्यासे कः संदर्भः?

---

## २० यास्यत्यद्य शकुन्तला–

**परिचयः—** काव्येषु दृश्यकाव्यानि श्रव्यकाव्यानीति च द्विविधता। येषां श्रवणेन वाचनेन वा रसास्वादोपयोगिता तानि श्रव्यकाव्यानि। येषां तु साभिनयप्रयोगसाध्यदर्शनसहकृतं श्रवणमेव रसास्वादोपयोगि भवति तानि दृश्यकाव्यानि इति प्रथन्ते। एतानि च दृश्यकाव्यानि दशरूपकाणीत्यपि व्यवह्रियन्ते। तेषु प्रधानत्वात्प्रमुखत्वाच्च नाटकस्य पुरातनानां महाकवीनां स्वारसिकी तत्र प्रवृत्तिः। नाटकेष्वपि 'काव्येषु नाटकं रम्यं तत्रापि च

शकुन्तला । तत्रापि च चतुर्थोऽङ्कः तत्र श्लोकचतुष्टयम् ' इति साहित्यविदां प्रसिद्ध्या शाकुन्तलनाटकस्य प्रथमगणनीयता । अस्य नाटकस्य कर्ता प्रसिद्धो महाकविः कालिदासः । तदीयामितिवृत्तादिकं च प्रथमपाठप्रस्तावे द्रष्टव्यम् ।

अत्र चोद्धृतो भागश्चतुर्थाङ्कगतः । अत्र पुत्रप्रेमास्पदं शकुन्तलां मृगयाव्याजेनाश्रमपदं प्राप्ते महाराजदुष्यन्ते बद्धभावां तेन च परिणीतामन्तर्दृशा ज्ञातवान् काश्यपस्तां सानन्दमभिनन्द्य पतिगृहं प्रेषयितुकामो दुहितृवियोगप्रयुक्तां वेदनामनुभवति । एवं गुरुजनाधिकारमनुध्यायन् तामुपदिशति, तथा दुष्यन्तं सन्दिशति च । तत्र ' **यास्यत्यद्य शकुन्तलेति, सेयं याति शकुन्तला पतिगृहम्, अस्मान् साधु विचिन्त्य, शुश्रूषस्व गुरून्** ' अन्ते च ' **अर्थो हि कन्या परकीय एव** ' **इत्यादिभिः** कण्वमुखेन प्रकटितस्य कुटुम्बिजनव्यवहारस्य अक्षरशोऽनुभववेद्यस्य निर्माता कविर्यस्तत्सत्यं कविकुलगुरुरेव । ईदृशीनां रसभावाविष्करणपटीयसीनां महाकविकृतीनामास्वादयितारो न केवलं भारतीयाः किन्तु परम्परातः संस्कृतवाङ्मये परिचयरहिताः पाश्चात्या अपि महता प्रयासेन संस्कृतभाषाज्ञानं कथञ्चित्सम्पाद्य तावन्मात्रेणैव नाटकीयरसास्वादमनुभवन्ति । श्रूयते किल ' गटेनामा जर्मनदेशीयः पण्डितो नाटकमिदं वाचयित्वा हर्षनिर्भरं ननर्त ' इति । अपरे च पाश्चात्यपण्डिता एतन्नाटककर्तारं कालिदासं शेक्सपिअरसदृशमेव मन्यन्ते । वस्तुतस्तु नायं शेक्स्पिअरसदृशः किन्तु स एव कालिदाससदृश इति वक्तुं युज्यते ।

( ततः प्रविशति स्नानोत्तीर्णः काश्यपः )

**काश्यपः** —

**यास्यत्यद्य शकुन्तलेति हृदयं संस्पृष्टमुत्कण्ठया,**
**कण्ठः स्तम्भितबाष्पवृत्तिकलुषश्चिन्ताजडं दर्शनम् ।**
**वैक्लव्यं मम तावदीदृशमहो स्नेहादरण्यौकसः,**
**पीड्यन्ते गृहिणः कथं नु तनयाविश्लेषदुःखैर्नवैः ॥१॥**

**सख्यौ—** हला शकुन्तले, अवसितमण्डनासि। परिधत्स्व साम्प्रतं क्षौमयुगलम्। (शकुन्तला उत्थाय परिधत्ते)

**गौतमी—** जाते, एष त आनन्दपरिवाहिणा चक्षुषा परिष्वजमान इव गुरुरुपस्थितः। आचारं तावत्प्रतिपद्यस्व।

**शकुन्तला—** (सव्रीडम्) तात, वन्दे।

**काश्यपः—** वत्से,

**ययातेरिव शर्मिष्ठा भर्तुर्बहुमता भव।**
**सुतं त्वमपि सम्राजं सेव पूरुमवाप्नुहि ॥२॥**

**गौतमी—** भगवन्, वरः खल्वेषः, नाशीः।

**काश्यपः—** वत्से, इतः सद्योहुताग्नीन् प्रदाक्षिणीकुरुष्व।

(शकुन्तला प्रदक्षिणं करोति)

प्रतिष्ठस्वेदानीम्। (सर्वे परिक्रामन्ति) भो भोः सन्निहितास्तपोवनतरवः

**पातुं न प्रथमं व्यवस्यति जलं युष्मास्वपीतेषु या,**
**नादत्ते प्रियमण्डनापि भवतां स्नेहेन या पल्लवम्।**
**आद्ये वः कुसुमप्रसूतिसमये यस्या भवत्युत्सवः,**
**सेयं याति शकुन्तला पतिगृहं सर्वैरनुज्ञायताम् ॥३॥**

**शकुन्तला—** (जनान्तिकम्) हला प्रियंवदे, आर्यपुत्रदर्शनोत्सुकाया अप्याश्रमपदं परित्यजन्त्या दुःखेन मे चरणौ पुरतः प्रवर्तेते।

**प्रियंवदा—** न केवलं तपोवनविरहकातरा सख्येव। त्वयोपस्थितवियोगस्य तपोवनस्यापि तावत्समवस्था दृश्यते।

**उद्गलितदर्भकवला मृगाः परित्यक्तनर्तना मयूराः।**
**अपसृतपाण्डुपत्रा मुञ्चन्त्यश्रूणीव लताः ॥४॥**

**शकुन्तला—** (स्मृत्वा) तात, लताभगिनीं वनज्योत्स्नां तावदामन्त्रयिष्ये।

**काश्यपः—** अवैमि ते तस्यां सौहार्दम्। इयं तावत दक्षिणेन।

**शकुन्तला–** ( लतामुपेत्य ) वनज्योत्स्ने, चूतसंगतापि मां प्रत्यालिङ्गैताभिः शाखाबाहाभिः । अद्यप्रभृति दूरंवर्तिनी ते खलु भविष्यामि । ( सख्यौ प्रति ) हला एषा द्वयोर्युवयोर्हस्ते निक्षेपः ।

**सख्यौ–** अयं जनः कस्य हस्ते समर्पितः ? ( बाष्पं विहरतः )

**काश्यपः–** अनसूये, अलं रुदित्वा । ननु भवतीभ्यामेव स्थिरीकर्तव्या शकुन्तला ।

**शकुन्तला–** तात, एषोटजपर्यन्तचारिणी गर्भमन्थरा मृगवधूर्यदाऽनघप्रसवा भविष्यति, तदा मह्यं किमपि प्रियानिवेदयितृकं विसर्जयिष्यथ ।

**काश्यपः–** नेदं विस्मरिष्यामः ।

**शकुन्तला–** ( गतिभङ्गं रूपयित्वा ) को नु खल्वेष निवसने मे सज्जते ? ( परावर्तते )

**काश्यपः–** वत्से,

**यस्य त्वया व्रणविरोपणमिङ्गुदीनां,**
**तैलं न्यषिच्यत मुखे कुशसूचिविद्धे ।**
**श्यामाकमुष्टिपरिवर्धितको जहाति,**
**सोऽयं न पुत्रकृतकः पदवीं मृगस्ते ॥५॥**

**शकुन्तला–** वत्स, किं सहवासपरित्यागिनीं मामनुसरसि ? अचिरप्रसूतया जनन्या विना विवर्धित एव । इदानीमपि मया विरहितं त्वां तातश्चिन्तयिष्यति । निवर्तस्व तावत् । ( रुदती प्रस्थिता )

**शार्ङ्गरवः–** भगवन्, ओदकान्तं स्निग्धो जनोऽनुगन्तव्य इति श्रूयते । तदिदं सरस्तीरम् । अत्र सन्दिश्य प्रतिगन्तुमर्हसि ।

**काश्यपः–** तेन हि क्षीरवृक्षच्छायामाश्रयामः ।

( सर्वे परिक्रम्य स्थिताः )

**काश्यपः**— (आत्मगतम्) किं नु खलु तत्रभवतो दुष्यन्तस्य युक्तरूपमस्माभिः सन्देष्टव्यम्? (चिन्तयति) शार्ङ्गरव, इति त्वया मद्वचनात् स राजा शकुन्तलां पुरस्कृत्य वक्तव्यः।

**शार्ङ्गरवः**— आज्ञापयतु भवान्।

**काश्यपः**—

**अस्मान् साधु विचिन्त्य संयमधनानुच्चैः कुलं चात्मनः।**
**त्वय्यस्याः कथमप्यबान्धवकृतां स्नेहप्रवृत्तिं च ताम्।**
**सामान्यप्रतिपत्तिपूर्वकमियं दारेषु दृश्या त्वया,**
**भाग्यायत्तमतः परं न खलु तद्वाच्यं वधूबन्धुभिः ॥६॥**

**शार्ङ्गरवः**— गृहीतः सन्देशः।

**काश्यपः**— वत्से, त्वमिदानीमनुशासनीयासि। वनौकसोऽपि सन्तो लौकिकज्ञा वयम्।

**शार्ङ्गरवः**— न खलु धीमतां कश्चिदविषयो नाम।

**काश्यपः**— सा त्वमितः पतिकुलं प्राप्य,

**शुश्रूषस्व गुरून् कुरु प्रियसखीवृत्तिं सपत्नीजने,**
**भर्तुर्विप्रकृतापि रोषणतया मा स्म प्रतीपं गमः।**
**भूयिष्ठं भव दक्षिणा परिजने भाग्येष्वनुत्सेकिनी,**
**यान्त्येवं गृहिणीपदं युवतयो वामाः कुलस्याधयः ॥७॥**

कथं वा गौतमी मन्यते?

**गौतमी**— एतावान् वधूजनस्योपदेशः। जाते, एतत् खलु सर्वमवधारय।

**शकुन्तला**— तात, इत एव किं प्रियंवदानसूये सख्यौ निवर्तिष्येते?

**काश्यपः**— वत्से, इमे अपि प्रदेये? न युक्तमनयोस्तत्र गन्तुम्। त्वया सह गौतमी यास्यति।

**शकुन्तला**— (पितरमाश्लिष्य) कथमिदानीं तातस्याङ्कात्परिभ्रष्टा मलयतटोन्मूलिता चन्दनलतेव देशान्तरे जीवितं धारयिष्ये?

**काश्यपः**– वत्से, किमेवं कातरासि ?

> **अभिजनवतो भर्तुः श्लाघ्ये स्थिता गृहिणीपदे,**
> **विभवगुरुभिः कृत्यैस्तस्य प्रतिक्षणमाकुला ।**
> **तनयमचिरात्प्राचीवार्कं प्रसूय च पावनम्,**
> **मम विरहजां न त्वं वत्से शुचं गणयिष्यसि ॥८॥**

( शकुन्तला पितुः पादयोः पतति )

**काश्यपः**– यदिच्छामि ते तदस्तु ।

**सख्यौ**– सखि, यदि नाम स राजा प्रत्यभिज्ञानमन्थरो भवेत्ततस्तस्येदमात्मनामधेयाङ्कितमङ्गुलीयकं दर्शय ।

**शकुन्तला**– अनेन सन्देहेन वामाकम्पिताऽस्मि ।

**सख्यौ**– मा बिभीहि । अतिस्नेहः पापशङ्की ।

**शकुन्तला**– ( आश्रमाभिमुखी स्थित्वा ) तात, कदा नु खलु भूयस्तपोवनं प्रेक्षिष्ये ?

**काश्यपः**—श्रूयताम् ।

> **भूत्वा चिराय चतुरन्तमहीसपत्नी,**
> **दौष्यन्तिमप्रतिरथं तनयं निवेश्य ।**
> **भर्त्रा तदर्पितकुटुम्बभरेण सार्धं,**
> **शान्ते करिष्यसि पदं पुनराश्रमेऽस्मिन् ॥९॥**

**गौतमी**– जाते, परिहीयते गमनवेला । निवर्तय पितरम् । अथवा चिरेणापि पुनः पुनरेषैवं मन्त्रयिष्यते । निवर्ततां भवान् ।

**काश्यपः**– वत्से, उपरुध्यते तपोनुष्ठानम् ।

**शकुन्तला**– तपश्चरणपीडितं तातशरीरम् । तन्मातिमात्रं मम कृत उत्कण्ठस्व ।

काश्यपः—

शममेष्यति मे शोकः कथं नु वत्से त्वया रचितपूर्वम् ।
उटजद्वारि विरूढं नीवारबलिं विलोकयतः ॥१०॥

गच्छ, शिवास्ते पन्थानः सन्तु ।

( निष्क्रान्ता शकुन्तला सहयायिनश्च )

सख्यौ— ( शकुन्तलां विलोक्य ) हा धिक् हा धिक्, अन्तर्हिता शकुन्तला वनराज्या ।

काश्यपः— ( सनिःश्वासम् ) अनसूये, गतवती वां सहधर्मचारिणी । निगृह्य शोकमनुगच्छतं मां प्रस्थितम् ।

उभे— तात, शकुन्तलाविरहितं शून्यमिव तपोवनं कथं प्रविशावः ।

काश्यपः— स्नेहप्रवृत्तिरेवंदर्शिनी । ( सविमर्शं परिक्रम्य ) हन्त भोः शकुन्तलां पतिकुलं विसृज्य लब्धमिदानीं स्वास्थ्यम् । कुतः—

अर्थो हि कन्या परकीय एव
तामद्य सम्प्रेष्य परिग्रहीतुः ।
जातो ममायं विशदः प्रकामं,
प्रत्यर्पितन्यास इवान्तरात्मा ॥११॥

( निष्क्रान्ताः सर्वे )

**प्रश्नाः**— (१) सुताविरहकातरस्य काश्यपस्य शोको लोकानुभवसंवादी कथम्? (२) अस्मिन् परिच्छेदे कविना ग्रथितानि सुभाषितवाक्यानि संगृह्यताम् । (३) वनज्योत्स्नाचूतवृत्तान्तस्य प्रकृते समञ्जसत्वं कथम्? (४) 'चराचरस्नेहवती शकुन्तला ' इत्ययमर्थो युक्तिभिः समर्थनीयः । (५) स्पष्टीकुरुत—यदिच्छामि ते तदस्तु । (६) शकुन्तलायाः पतिगृहगमनप्रसङ्गेन तस्यैव काश्यपस्य शोकः समाधानं चेति विरुद्धमुभयं कथं संगच्छते ?

# २१ कर्णाश्वत्थाम्नोः कलहः

**परिचयः**— संस्कृतवाङ्मये सरसाभिः कृतिभिश्चिरन्तनं पदमाप्नुवत्सु नाटककारेषु कविर्भट्टनारायणोऽर्हति विशेषतो गणनाम् । अयं कविः कदा कस्मिंश्च स्थाने जनिं लेभे कुतो वा गुरोरध्ययनं प्राप, कदा च स्वीयं वेणीसंहारं नाम नाटकं प्रणिनायेति विषये न निश्चयेन कोऽपि कथयितुं शक्नोति । किन्तु मम्मटानन्दवर्धनवामनाचार्यादिभिः साहित्यशास्त्रग्रन्थकृद्भिः स्वस्वग्रन्थेषूद्धृतेभ्यो वेणीसंहारनाटकपद्येभ्यो विज्ञातं भवति यदयमेतेषामपि प्राक्कालीन इति । क्रिस्ताब्दस्याष्टमे शतके सञ्जातः काव्यालङ्कारसूत्रवृत्तिकारो वामनस्तु स्वीये ग्रन्थे वेणीसंहारतः कानिचित् पद्यानि उदाहरति तेन च भट्टनारायणः वामनात्प्रागेव सञ्जात इत्यनुमीयते ।

नाटकेषु रसादियोजनायाम् 'एक एव भवेदङ्गी शृङ्गारो वीर एव वा' इति नियमनुसृत्य बहुभिः कविभिस्तावत् शृङ्गार एव प्राधान्येन स्वनाट्यकृतिषूपवर्णितः । किन्तु नाटके वीरं रसं प्राधान्येन वर्णयित्वा रसिकान् पुलकयन् भट्टनारायणः स्वयमेव स्वस्योपमानतामर्हति । यद्यपि कालिदासस्येव नास्य भाषाऽतिरमणीया तथापि नाटकेऽस्मिन् यथोचितरसपात्रप्रसङ्गभाषादिनिवेशेन रसं वीरं प्रपोषयन् अयमपि विशेषसंस्तवमर्हति । वेणीसंहारस्य तृतीयाङ्कादुद्धृत्य वीररसप्रधानोऽयं परिच्छेदोऽत्र वाचकानामुपायनीक्रियते ।

यथासमयमज्ञातवासं समाप्य राजधानीं समायाताः सन्धिमिच्छन्तः पाण्डवाः

"इन्द्रप्रस्थं वृकप्रस्थं जयन्तं वारणावतम् ।
प्रयच्छ चतुरो ग्रामान् कञ्चिदेकं च पञ्चमम् ॥"

इति प्रार्थितं स्वल्पमपि राज्यांशं दातुमनिच्छद्भिः कौरवैः साकं युद्धमुदघोष-

यन्। सम्प्रवृत्ते समरेऽचिरेणैव शरतल्पमधिशयाने भीष्मे, कौरवैः सैनापत्येऽभिषिक्तो द्रोणः 'अश्वत्थामा हतः' इति वचःश्रवणमात्रमेव शोकाकुलः स्वसुतविनाशदुःखितः समरे शस्त्रं संत्यज्य किंकर्तव्यतामूढः स्थितः। द्रुपदपुत्रेण च धृष्टद्युम्नेन निशितेन निस्त्रिंशेन विच्छिन्नकण्ठनालः परलोकं प्रापित इति दारुणं वृत्तं श्रुत्वा 'अपाण्डवमकेशवं भुवनं' कर्तुमुद्यतो गुरुसूनुरश्वत्थामा दुर्योधनमभ्येत्य सैनापत्याभिषेकमयाचत। किन्तु 'प्रागेव प्रतिपन्नोऽयमर्थोऽङ्गराजस्ये'ति दुर्योधनवचः श्रुत्वापि पुनःपुनस्तं तदर्थं निरबध्नात्। तदा च तत्रैव कुटिलमतिना कर्णेनाकारणमाधिक्षिप्तः। एवं रीत्या च सम्प्रवृत्तः कर्णाश्वत्थाम्नोर्वाक्कलहः कविनाऽतीवौघवत्या वाण्याऽऽविष्कृतो वीररसस्य चिरन्तनं लक्ष्यमित्युदाहर्तुमर्हति।

अत्र सुतशोकवशादेव शस्त्रं त्यक्तवतोऽपि द्रोणस्य चरितमन्यथा ग्राहितवतः कर्णस्य कुटिलमतिता '**दैवायत्तं कुले जन्म, मदायत्तं तु पौरुषम्**' इत्यादिना स्वसामर्थ्याभिमानित्वमकारणमेव गुरुपुत्रावमानेन परोत्कर्षासहिष्णुत्वं तथा च पितृनिधनदुःखितस्याश्वत्थाम्नो गुरुजनानुरागाभिमानपराक्रमशीलत्वकौरवपक्षपातित्वात्यन्तामर्षशालित्वादयः स्वभावविशेषाः कविनाऽनायासेनैवाकृत्रिमेणेव नाट्यरचनाचातुर्येणाविष्कृता भान्ति।

(कर्णदुर्योधनावासनस्थौ तिष्ठतः। ततः प्रविशतः कृपाश्वत्थामानौ)

**दुर्योधनः**– (दृष्ट्वा) अये, कथं कृपोऽश्वत्थामा च। (आसनादवतीर्य) गुरो अभिवादये। (अश्वत्थामानं प्रति) आचार्यपुत्र,

**एह्यस्मदर्थहततात परिष्वजस्व,**
**क्लान्तैरिदं मम निरन्तरमङ्गमङ्गैः**
**स्पर्शस्तवैष भुजयोः सदृशः पितुस्ते,**
**शोकेऽपि यो महति निर्वृतिमादधाति ॥१॥**

( आलिङ्ग्य पार्श्वे उपवेशयति । अश्वत्थामा बाष्पमुत्सृजति )

**कर्णः**— द्रौणायने अलमत्यर्थमात्मानं शोकानले प्रक्षेप्तुम् ।

**दुर्योधनः**— आचार्यपुत्र, को विशेष आवयोरस्मिन् व्यसनमहार्णवे । पश्य ।

**तातस्तव प्रणयवान्, स पितुः सखा मे,**
**शस्त्रे यथा तव गुरुः स तथा ममापि ।**
**किं तस्य देहनिधने कथयामि दुःखम्,**
**जानीहि तद्गुरुशुचा मनसा त्वमेव ॥२॥**

**कृपः**— वत्स, यथाह कुरुपतिस्तथैव तत् ।

**अश्वत्थामा**— राजन्नेवं पक्षपातिनि त्वयि युक्तमेव शोकभारो लघूकर्तुम् । किन्तु

**मयि जीवति यत्तातः केशग्रहमवाप्तवान् ।**
**कथमन्ये करिष्यन्ति पुत्रेभ्यः पुत्रिणः स्पृहाम् ॥३॥**

**कर्णः**— द्रौणायन किमत्र क्रियते यदा तेनैव सर्वपरिभवत्राणहेतुना शस्त्रमुत्सृजतैतादृशीमवस्थामात्मा नीतः ।

**अश्वत्थामा**— अङ्गराज, किमाह भवान् 'किमत्र क्रियत' इति । श्रूयतां यत्क्रियते ।

**यो यः शस्त्रं बिभर्ति स्वभुजगुरुबलः पाण्डवीनां चमूनां,**
**यो यः पाञ्चालगोत्रे शिशुरधिकवया गर्भशय्यां गतो वा ।**
**यो यस्तत्कर्मसाक्षी चरति मयि रणे यश्च यश्च प्रतीपः**
**क्रोधान्धस्तस्य तस्य स्वयमिह जगतामन्तकस्यान्तकोऽहम् ।४।**

**दुर्योधनः**— आचार्यपुत्र, तस्य तथाविधस्यानन्यसाधारणस्य ते वीरभावस्य किमन्यत्सदृशम् ?

**कृपः**— राजन्, सुमहान् खलु द्रोणपुत्रेण वोढुमध्यवसितः समरभारः । तदहमेवं मन्ये, भवता कृतपरिकरोऽयमुच्छेत्तुं लोकत्रयमपि समर्थः । किं पुनर्युधिष्ठिरबलम् । अतोऽभिषिच्यतां सैनापत्ये ।

**दुर्योधनः**– सुष्ठु । युज्यमानमभिहितं युष्माभिः । किं तु प्राक्प्रातिपन्नोऽयमर्थोऽङ्गराजस्य ।

**कृपः**– राजन्, असदृशपरिभवशोकसागरे निमज्जन्तमेनमङ्गराजस्यार्थे नैवोपेक्षितुं युक्तम् । अस्यापि च तदेवारिकुलमनुशासनीयम् । अतः किमस्य पीडा न भविष्यति ?

**अश्वत्थामा**– राजन् कौरवेश्वर, किमद्यापि युक्तायुक्तविचारणया ?

**प्रयत्नपरिबोधितः स्तुतिभिरद्य शेषे निशाम्**
**अकेशवमपाण्डवं भुवनमद्य निःसोमकम् ।**
**इयं परिसमाप्यते रणकथाद्य दोःशालिना**
**व्यपैतु नृपकाननातिगुरुरद्य भारो भुवः ।।५।।**

**कर्णः**– द्रोणात्मज, वक्तुं सुकरमिदमध्यवसितुं दुष्करम् । बहवः कौरवबलेऽस्य कर्मणः शक्ताः ।

**अश्वत्थामा**– अङ्गराज, एवम् । बहवः कौरवबलेऽत्र शक्ताः । किं तु दुःखोपहतः शोकावेगवशाद् ब्रवीमि न पुनर्वीरजनाधिक्षेपेण ।

**कर्णः**– मूढ, दुःखितस्याश्रुपातः, कुपितस्य चायुधद्वितीयस्य संग्रामावातरणमुचितम् । नैवंविधाः प्रलापाः ।

**अश्वत्थामा**– ( सक्रोधम् ) अरे रे राधागर्भभारभूत, सूतापसद, ममापि नामाश्वत्थाम्नो दुःखितस्याश्रुभिः प्रतिक्रियामुपदिशसि न शस्त्रेण ? पश्य–

**निर्वीर्यं गुरुशापभाषितवशात् किं मे तवेवायुधं ?**
**सम्प्रत्येव भयाद्विहाय समरं प्राप्तोऽस्मि किं त्वं यथा ?**
**जातोऽहं स्तुतिवंशकीर्तनविदां किं सारथीनां कुले ?**
**क्षुद्रारातिकृताप्रियं प्रतिकरोम्यस्त्रेण, नास्त्रेण यत् ।।६।।**

**कर्णः**– ( सक्रोधम् ) अरे रे वाचाट, वृथाशस्त्रग्रहणदुर्विदग्ध ! बटो !

निर्वीर्यं वा सवीर्यं वा मया नोत्सृष्टमायुधम् ।
यथा पाञ्चालभीतेन पित्रा ते बाहुशालिना ॥७॥

अपि च– सूतो वा सूतपुत्रो वा यो वा को वा भवाम्यहम् ।
दैवायत्तं कुले जन्म मदायत्तं तु पौरुषम् ॥८॥

**अश्वत्थामा**– ( सक्रोधम् ) अरे रे रथकारकुलकलङ्क, राधागर्भभारभूत ! आयुधानाभिज्ञ, तातमप्याधिक्षिपसि ? अथ वा—

स भीरुः शूरो वा प्रथितभुजसारस्त्रिभुवने,
कृतं यत्तेनाजौ प्रतिदिनमियं वेत्ति वसुधा ।
परित्यक्तं शस्त्रं कथमिति स सत्यव्रतधरः
पृथासूनुः साक्षी, त्वमसि रणभीरो क्व नु तदा ॥९॥

**कर्णः**– ( विहस्य ) एवं भीरुरहम् । त्वं पुनर्विक्रमैकरसं स्वपितरमनुसृत्य न जाने किं करिष्यसि ? महान्मे संशयो जातः । अपि च रे मूढ,

यदि शस्त्रमुज्झितमशस्त्रपाणयो,
न निवारयन्ति किमरीनुदायुधान् ?
यदनेन मौलिदलनेऽप्युदासितं,
सुचिरं स्त्रियेव नृपचक्रसंनिधौ ॥१०॥

**अश्वत्थामा**– ( सक्रोधं सकम्पं च ) दुरात्मन्, राजवल्लभप्रगल्भ, सूतापसद, असंबद्धप्रलापिन्,

कथमपि न निषिद्धो दुःखिना भीरुणा वा,
द्रुपदतनयपाणिस्तेन पित्रा ममाद्य ।
तव भुजबलदर्पाध्मायमानस्य वामः
शिरसि चरण एष न्यस्यते वारयैनम् ॥११॥

( तथा कर्तुमिच्छति )

**कृपदुर्योधनौ**– गुरुपुत्र, मर्षय मर्षय। (इति निवारयतः, अश्वत्थामा चरणप्रहारं नाटयति)

**कर्णः**– (सक्रोधमुत्थाय, खड्गमाकृष्य) अरे दुरात्मन्, ब्रह्मबन्धो, आत्मश्लाधिन्,

**जात्या काममवध्योऽसि चरणं त्विदमुद्धृतम्।**
**अनेन लूनं खड्गेन पतितं वेत्स्यसि क्षितौ ॥१२॥**

**अश्वत्थामा**– अरे मूढ, जात्या चेदवध्योऽहम् इयं सा जातिः परित्यक्ता। (इति यज्ञोपवीतं छिनत्ति। पुनश्च सक्रोधम्)

**अद्य मिथ्याप्रतिज्ञोऽसौ किरीटी क्रियते मया।**
**शस्त्रं गृहाण वा त्यक्त्वा मौलौ वा रचयाञ्जलिम् ॥१३॥**

(उभावपि खड्गमाकृष्यान्योन्यं प्रहर्तुमुद्यतौ। कृपदुर्योधनौ निवारयतः)

**दुर्योधनः**– आचार्यपुत्र, शस्त्रग्रहणेनालम्।

**कृपः**– वत्स, सूतपुत्र, शस्त्रग्रहणेनालम्।

**अश्वत्थामा**– मातुल, मातुल! किं निवारयसि? अयमपि तातनिन्दाप्रगल्भः सूतापसदः धृष्टद्युम्नपक्षपात्येव।

**कर्णः**– राजन् न खल्वहं निवारयितव्यः।

**उपेक्षितानां मन्दानां धीरसत्त्वैरवज्ञया।**
**अत्रासितानां क्रोधान्धैर्भवत्येषा विकत्थना ॥१४॥**

**अश्वत्थामा**– राजन् मुञ्च, मुञ्चैनम्। आसादयतु मद्भुजान्तरनिष्पेषसुलभमसूनामवसादनम्। अन्यच्च राजन्। स्नेहेन वा कार्येण वा यत्त्वमेनं ताताधिक्षेपकारिणं दुरात्मानं मत्तः परिरक्षितुमिच्छसि तदुभयमपि वृथैव ते। पश्य।

**पापप्रियस्तव कथं गुणिनः सखायं**
**सूतान्वयः शशधरान्वयसंभवस्य।**

**हन्ता किरीटिनमयं ? नृप मुञ्च, कुर्यां**
**क्रोधादकर्णमपृथात्मजमद्य लोकम् ॥१५॥**

(इति प्रहर्तुमिच्छति ।)

**कर्णः**– अरे वाचाट, ब्राह्मणाधम, अयं न भवसि । राजन्, मुञ्च मुञ्च । न खल्वहं वारयितव्यः । (इति हन्तुमिच्छति) (दुर्योधनकृपौ निवारयतः)

**दुर्योधनः**– कर्ण, गुरुपुत्र, कोऽयमद्य युवयोर्व्यामोहः ?

**कृपः**– वत्स, अन्यदेव प्रस्तुतमन्यत्रावेग इति कोऽयं व्यामोहः ? स्वबलव्यसनं चेदमस्मिन् काले राजकुलस्यास्य युष्मत्त एव भवतीति वामः पन्थाः ।

**अश्वत्थामा**– मातुल, न लभ्यतेऽस्य कटुप्रलापिनो रथकारकुलकलङ्कस्य दर्पः शातयितुम् ।

**कृपः**– वत्स ! अकालः खलु स्वबलप्रधानविरोधस्य ।

**अश्वत्थामा**– मातुल, यद्येवम्—

**अयं पापो यावन्न निधनमुपेयादरिशरैः**
**परित्यक्तं तावत्प्रियमपि मयास्त्रं रणमुखे ।**
**बलानां नाथेऽस्मिन् परिकुपितभीमार्जुनभये**
**समुत्पन्ने, राजा प्रियसखबलं वेत्तु समरे ॥१६॥**

(इति खड्गमुत्सृजति)

**कर्णः**– कुलक्रमागतमेवैतद्भवादृशां यदस्त्रपरित्यागो नाम ।

**अश्वत्थामा**– ननु रे अपरित्यक्तमपि भवादृशैः चिरपरित्यक्तमेव निष्फलत्वात् ।

**कर्णः**– अरे मूढ,

**धृतायुधो यावदहं तावदन्यैः किमायुधैः ।**
**यद्वा न सिद्धमस्त्रेण मम तत्केन सेत्स्यति ॥१७॥**

( नेपथ्ये )

आः दुरात्मन् ! द्रौपदीकेशाम्बराकर्षणपातकिन् ! धार्तराष्ट्रापसद ! चिरस्य खलु कालस्य मत्संमुखीनमागतोऽसि । क्षुद्रपशो ! क्वेदानीं गम्यते ? अपि च भो भो राधेयदुर्योधनसौबलप्रभृतयः पाण्डवाविद्वेषिणश्चापपाणयो मानधनाः ! शृण्वन्तु भवन्तः ।

**कृष्टा येन शिरोरुहे नृपशुना पाञ्चालराजात्मजा,**
**येनास्याः परिधानमप्यपहृतं राज्ञां गुरूणां पुरः ।**
**यस्योरःस्थलशोणितासवमहं पातुं प्रतिज्ञातवान्**
**सोऽयं मद्भुजपञ्जरे निपतितः संरक्ष्यतां कौरवाः ॥१८॥**

( सर्वे आकर्णयन्ति )

**अश्वत्थामा**– ( सोपहासम् ) अङ्गराज ! सेनापते ! जामदग्न्याशिष्य ! द्रोणोपहासिन् ! भुजबलपरिरक्षितसकललोक ! इदं तदासन्नतरमेव संवृत्तम् । रक्षैनं सांप्रतं भीमाद् दुःशासनम् ।

**कर्णः**– आः का शक्तिर्वृकोदरस्य मयि जीवति दुःशासनस्य छायामप्याक्रमितुम् ? युवराज ! न भेतव्यं न भेतव्यम् । अयमहमागतोऽस्मि । ( इति निष्क्रान्तः )

**अश्वत्थामा**– राजन् कौरवनाथ, अभीष्मद्रोणं सम्प्रति कौरवबलमालोडयन्तौ भीमार्जुनौ राधेयेनैवंविधेनान्येन वा न शक्येते निवारयितुम् । अतः स्वयमेव भ्रातुः प्रतीकारपरो भव । ( इति निष्क्रान्तः कृपेणसह )

**दुर्योधनः**– आः का शक्तिर्दुरात्मनः पवनतनयस्यान्यस्य वा मयि शस्त्रपाणौ वत्सस्य छायामप्याक्रमितुम् ? वत्स न भेतव्यं न भेतव्यम् । कः कोऽत्र भोः ! रथमुपनय । ( इति निष्क्रान्तः )

**प्रश्नाः**— (१) गुरुपुत्रं दुर्योधनः कथं सान्त्वयति ? (२) किमर्थं कृपाश्वत्थामानौ दुर्योधनमभीतः ? (३) कर्णोऽश्वत्थामानं कथं किमर्थं चाधिक्षि-

पति ? (४) ससन्दर्भमर्थविशेषं विशदयत— १ बहवः कौरवबलेऽस्य कर्मणः शक्ताः। २ निर्वीर्यं गुरुशापभाषितवशात् किं मे तवेवायुधम्। ३ इयं सा जातिः परित्यक्ता। ४ अयमपि तातनिन्दाप्रगल्भः सूतापसदो धृष्टद्युम्नपक्षपाती एव। ५ यद्वा न सिद्धमस्त्रेण मम तत्केन सेत्स्यति। (५) कर्णाश्वत्थाम्नोः कलहमभिनयत।

---

# २२ अहं चोत्तमः

**परिचयः**— आसीत् श्रीकृष्णमिश्राख्यः कश्चित् विद्वान् संन्यासी कीर्तिवर्मणः नृपस्य समये क्रिस्तीये एकादशे शतके। स च नैकान् छात्रान् वेदान्तशास्त्रम् अध्यापयति स्म। 'तस्य छात्रेषु एकतमः नवरसपरिप्लुते सुबोधे मधुरे च काव्यनाटकादिवाङ्मये एवाविष्टान्तःकरणः दुरूहान् वेदान्तसिद्धान्तानधिगन्तुं नाशक्नोत्। शिष्येषु परमकारुणिकः श्रीकृष्णमिश्रयतिः तस्य छात्रस्यावबोधार्थं प्रबोधचन्द्रोदयं नाम नाटकं व्यरीरचत्'। इति एतन्नाटकविषये किंवदन्ती वर्तते। अत्र प्रधानः शान्तरसः, अन्ये च शृङ्गारवीरहासादयोऽङ्गरूपेण निवेशिताः सन्ति रसाः। श्रीमच्छङ्कराचार्यप्रतिपादितमद्वैतमतमनुसृत्य च नैके वेदान्तसिद्धान्ताः प्रतिपादिताः, तथा च सर्वेषामनुभववेद्यः विवेकदयाक्षमाद्यन्तःसुहृदां महामोहहिंसातृष्णाद्यन्तःशत्रूणां च सदसद्भावनानां कलहः अन्ते च सद्भावनानां विजयश्चोपवर्णितः।

विशिष्टमतप्रचारार्थं विरचितानि नाटकानि अत्यल्पानि संस्कृतनाट्यसृष्टौ विलसन्ति। तेषु प्रसिद्धमिदं नाटकं कठिनतराणां शास्त्रीयसिद्धान्तानां नाटकद्वारा प्रतिपादने रचयितुः कौशलमेव ख्यापयति।

महामोहः विवेकं जेतुं कामक्रोधादिकान् स्वसेवकान् तत्र तत्र तीर्थस्थानेषु प्रेषयति। तत्र दम्भस्य वाराणसीक्षेत्रे नियुक्तिः कृता। प्रायः तीर्थस्थानेषु एव दम्भादीनामधिकरूपेणावस्थितिर्दृश्यते इति कवेरत्र गूढाकूतम्। नाटकस्यास्य द्वितीयेऽङ्के दम्भस्य पितामहः अहंकारोऽपि कारणवशाद्वाराणस्यां दम्भस्याश्रमं प्रविष्टः। तदा तयोः यः संवादः सोऽत्र पाठे उद्धृतोऽस्ति। तत्र चिरायादर्शनाद्वेषान्तरत्त्वाच्च प्रथममुभयोः परस्परं प्रत्यभिज्ञानं नाभूत् अन्ते चोभावपि परस्परं प्रत्यभ्यजानीताम्।

नाटकेऽस्मिन् अमूर्तानां सदसद्भावनानां पात्ररूपेण मूर्तता तथैव तासां परस्परं पितापुत्रादिरूपः संबन्धः अपि च संभाषणादिरूपेणाभिप्रायाविष्कारश्चेत्यादयो विषया अत्यन्तमौचित्यमावहन्तीति अल्पीयसाप्यनेन दम्भाहंकारसंवादेन पाठकाः जानीयुरिति दृढमाशास्महे।

( दम्भस्याश्रमे प्रविशन्तमहंकारं प्रति )

**बटुः**– ( प्रविश्य ससंभ्रमम् ) ब्रह्मन्, दूरत एव स्थीयताम्। यतः पादौ प्रक्षाल्य एतदाश्रमपदं प्रवेष्टव्यम्।

**अहंकारः**– ( सक्रोधम् ) आः पाप, [1]तुरुष्कदेशं प्राप्ताः स्मः? यत्र [2]श्रोत्रियानतिथीनासनपाद्यादिभिरपि गृहिणो नोपतिष्ठन्ति।

( दम्भः हस्तसंज्ञया समाश्वासयति )

**बटुः**– एवमाराध्यपादा[3] आज्ञापयन्ति 'दूरदेशादागतस्यार्यस्य कुलशीलादिकं न सम्यगस्माकं विदितम्'।

**अहंकारः**– आः कथमस्माकमपि कुलशीलादिकमिदानीं परीक्षितव्यम्। श्रूयताम्—

**गौडं राष्ट्रमनुत्तमं निरुपमा तत्रापि राढापुरी**
**भूरिश्रेष्ठकनाम धाम परमं तत्रोत्तमो नः पिता।**

---

१ म्लेच्छविशेषः, २ वेदज्ञः, ३ पूजनीयाः.

**तत्पुत्राश्च महाकुला न विदिताः कस्यात्र, तेषामपि**
**प्रज्ञाशीलविवेकधैर्यविनयाचारैरहं चोत्तमः ॥१॥**

(दम्भो बटुं पश्यति)

**बटुः**– (ताम्रघटीं गृहीत्वा) भगवन्, चरणशुद्धिर्विधीयताम् ।

**अहंकारः**– (स्वगतम्) भवतु । कोऽत्र विरोधः । एवं क्रियते ।

(तथा कुर्वोपसर्पति, दम्भः दन्तान्संपीड्य बटुं पश्यति)

**बटुः**– दूरे तावत्स्थीयताम् । वाताहताः प्रस्वेदकणिकाः प्रसरन्ति ।

**अहंकारः**– अहो, अपूर्वमिदं ब्राह्मण्यम् ।

**बटुः**– ब्रह्मन्, एवमेतत् । तथाहि—

**अस्पृष्टचरणा ह्यस्य चूडामणिमरीचिभिः ।**
**नीराजयन्ति भूपालाः पादपीठान्तभूतलम् ॥२॥**

**अहंकारः**– (स्वगतम्) अहो दम्भग्राह्योऽयं देशः । (प्रकाशम्) भवतु, अस्मिन्नासने उपविशामि । (तथा कर्तुमिच्छति)

**बटुः**– नाराध्यपादानामन्यैरासनमाक्रम्यते ।

**अहंकारः**– आः पाप, अस्माभिरपि दक्षिणराढाप्रदेशप्रसिद्धविशुद्धिभिर्ना-क्रमणीयमिदमासनम् ? शृणु रे मूर्ख,

**नास्माकं जननी तथोज्वलकुला, सच्छ्रोत्रियाणां पुन-**
**र्व्यूढा काचन कन्यका खलु मया तेनास्मि तालाधिकः ।**
**अस्मच्छालकभागिनेयदुहिता मिथ्याभिशप्ता यत-**
**स्तत्संपर्कवशान्मया स्वगृहिणी प्रेयस्यपि प्रोज्झिता ॥३॥**

**दम्भः**– ब्रह्मन्, यद्यप्येवं तथाप्यस्माकमविदितवृत्तान्तो भवान् । तथाहि—

**सदनमुपगतोऽहं पूर्वमम्भोजयोनेः**
**सपदि मुनिभिरुच्चैरासनेषूज्झितेषु ।**

सशपथमनुनीय ब्रह्मणा गोमयाम्भः—
परिमृजितनिजोरावाशु संवेशितोऽस्मि ॥४॥

**अहंकारः**– ( स्वगतम् ) अहो, दाम्भिकस्य ब्राह्मणस्यात्युक्तिः। (विचिन्त्य) अथवा दम्भोऽयम्। भवत्वेवं तावत्। ( प्रकाशम् ) आः किमेवं गर्वायसे। ( सक्रोधम् )

**अरे क इव वासवः कथय कोऽत्र पद्मोद्भवो**
**वद प्रभवभूमयो जगति का मुनीनामपि।**
**अवेहि तपसो बलं मम, पुरन्दराणां शतं**
**शतं च परमेष्ठिनां पततु वा मुनीनां शतम् ॥५॥**

**दम्भः**– ( विलोक्य सानन्दम् ) अये, आर्यः पितामहोऽस्माकमहंकारः। आर्य, दम्भो लोभात्मजोऽहं, भो अभिवादये।

**अहंकारः**– वत्स, आयुष्मान् भव। बालः खल्वसि मया द्वापारान्ते दृष्टः। संप्रति चिरकालविप्रकर्षाद्वार्धक्यग्रस्ततया च न सम्यक् प्रत्यभिजानामि। अपि त्वत्कुमारस्यानृतस्य कुशलम्?

**दम्भः**– अथ किम्? सोऽप्यत्रैव महामोहस्याज्ञया वर्तते। नहि तेन विना मुहूर्तमप्यहं प्रभवामि।

**अहंकारः**– अथ तव मातापितरौ तृष्णालोभावपि कुशलौ?

**दम्भः**– तावपि राज्ञो महामोहस्याज्ञयाऽत्रैव वर्तेते। तयोर्विना क्षणमपि न तिष्ठामि। आर्यमिश्रैः पुनः केन प्रयोजनेनात्र प्रसादः कृतः?

**अहंकारः**– वत्स, मया महामोहस्य विवेकसकाशादत्याहितं श्रुतम्। तेन तद्वृत्तान्तं प्रत्येतुमागतोऽस्मि।

**दम्भः**– स्वागतमेवार्यस्य। यतो महाराजस्यापीन्द्रलोकादत्रागमनं श्रूयते। अस्ति च किंवदन्ती यद्देवेन वाराणसी राजधानी वस्तुं निरूपितेति। ( नेपथ्ये ) भो भोः पौराः, एष खलु संप्राप्तो देवो महामोहः। तेन

निष्यन्दैश्चन्दनानां स्फटिकमणिशिलावेदिकाः संस्क्रियन्तां,
मुच्यन्तां यन्त्रमार्गाः प्रचरतु परितो वारिधारा गृहेषु ।
उच्छ्रीयन्तां समन्तात् स्फुरदुरुमणयः श्रेणयस्तोरणानां,
धूयन्तां सौधमूर्धस्वमरपतिधनुर्धामचित्राः पताकाः ॥६॥

**दम्भः**– आर्य, प्रत्यासन्नोऽयं महाराजः । तत्प्रत्युद्गमनेन संभाव्यतामार्येण ।

**अहंकारः**– एवं भवतु । ( इत्युभौ निष्क्रान्तौ )

**प्रश्नाः**— (१) अहंकारः स्वोत्तमत्वं कथं ख्यापयति ? (२) दम्भस्य ब्रह्मसदने क उपचारः ? (३) दम्भाहंकारयोः वाराणस्यां निवासे कविः किं कारणम् अभिप्रैति ? (४) प्रबोधचन्द्रोदयनाटकस्य इतरेभ्यो नाटकेभ्यः को विशेषः ? (५) नाटकस्यास्य लेखने का किंवदन्ती ? ( ६ ) अहंकारतृष्णा-लोभदम्भादीनां परस्परं कः संबन्धः कविना कल्पितः, का च तत्रौचिती ?

# २३ परार्थः खलु देहलाभः

**परिचयः**— श्रीहर्षवर्धनः नाम निखिलस्योत्तरभारतस्य सम्राट् स्थाण्वीश्वराधिपः खिस्ताब्दस्य सप्तमे शतके संजज्ञे । अस्य पिता राजा प्रभाकरवर्धनः, माता च यशोमती । अस्य ज्येष्ठो भ्राता राज्यवर्धनो नाम पितर्युपरते राज्याधिकारमलभत परं कालेनाल्पेनैव गौडमहीशेन शशाङ्केन कपटं प्रयुज्य युद्धे हतः । तदनन्तरं श्रीहर्षवर्धनः राज्याधिकारमलभत । स च पञ्चस्वेव संवत्सरेषु निखिलेऽप्युत्तरे भारते स्वपराक्रमेण स्वसाम्राज्यं स्थिरीचकार ।

यथा चायं वीराग्रणीः यथा च विविधासु विद्यासु कलासु च गुणज्ञः तथैव स्वयं विविधविद्याकलादिगुणमाण्डितः आसीत् । भारतवर्षे इतिहासे ये केचन भोजविक्रमशूद्रकहालादयः सम्राजो विद्याविभूषिता महाकवयश्चासन् तेषु अन्यतमत्वेनायमवश्यं गणनीयो भवतीतीतिहासविदां मतम् ।

श्रीहर्षस्य राजसभां बाणधावकमयूरादयः नैके पण्डिताः कवयश्च मण्डयाभासुरिति प्रसिद्धिर्वर्तते । तत्र कादम्बरीरचयिता बाणभट्टः हर्षचरितं नाम गद्यकाव्यमस्यैव चरितरूपं रचितवान् । नैषधचरितं महाकाव्यं रचितवान् हर्षः क्रिस्ताब्दस्य द्वादशे शतके संजात इत्यस्मात्पृथक्त्वमर्हतीति नास्ति वचनसापेक्षता । अन्येऽपि हर्षनामानोऽस्माद्भिन्ना इति प्रमाणैरवधार्यते ।

रत्नावली, प्रियदर्शिका, नागानन्दम्, इति नाटकत्रयं श्रीहर्षविरचितमिति प्रथितं, तत्र 'स्वसभाकविभिः विरचितानि नाटकान्येव तेभ्यः प्रभूततरं धनं वितीर्य स्वयं विराचितानीति प्रसिद्धिमकारयदयम्' इत्यपि किंवदन्ती विषयेऽस्य वर्तते, परं दृढतरप्रमाणाभावात् विद्वत्स्वभावविरोधाच्च न तन्मतं भूतार्थतां यायात् इति प्रामाणिकाः मन्वते ।

तत्र नागानन्दस्य चतुर्थाङ्कादयं पाठः समुद्धृतः । नाटककथावस्तु संक्षेपतः इत्थं वर्तते— 'जीमूतवाहनो नाम विद्याधरः राजकुमारः मूर्तिमान् सत्त्वगुण इव दयादाक्षिण्यादिगुणवृन्दमण्डित आसीत् । स च पित्रोः शुश्रूषापरायणः समृद्धमपि राज्यममात्येषु संस्थाप्य तपस्यां कर्तुकामाभ्यां वृद्धमातापितृभ्यां साकं वनं प्राप । तत्र मलयपर्वते विश्वावसोः राज्ञः मलयवती नाम कन्या गौरीमन्दिरे तेन दृष्टा । अथ चोभयोः परस्परं जातानुरागयोः गुर्वनुज्ञया विवाहः समजनि । ततः नाटकस्य चतुर्थेऽङ्के जीमूतवाहनः श्यालकेन मलयवतीभ्रात्रा मित्रावसुना सह समुद्रवेलायां विहर्तुं गतः 'पूर्वसमयमनुसृत्यात्र गरुडः प्रतिदिनमेकैकं नागं भक्षयति' इत्यजानात् । दयार्द्रचेताः सः प्रतिदिनं नागानां विपत्तिं ज्ञात्वा तत्प्रतिकारेऽसमर्थो नितरां चिन्तातुरोऽभवत् ।

तावदेव मित्रावसुः कारणवशाद्‌गृहं प्रति निवृत्तः। तस्मिन्नेव समये शङ्खचूडो नाम नागः गरुडस्य भक्ष्यमिति तत्रागतः, तन्माता च पुत्रशोकाकुला सोरस्ताडमशोचत्। जीमूतवाहनः स्वदेहार्पणेन तं शङ्खचूडं रक्षितुं प्रायतत। वध्याचिह्नं रक्तांशुकद्वयमयाचत च। परं शङ्खचूडः तन्माता च तन्नान्वमन्वाताम्। अन्ते यावदयं शङ्खचूडः भगवन्तं प्रदक्षिणीकर्तुं गच्छति तावदेव श्वश्र्वा मलयवतीमात्रा कुलाचार इति प्रेषितं रक्तं वासोयुगुलं परिधाय स वध्यशिलामारोहति। गरुडश्चागत्य तं भक्षयितुमपनयति। अन्ते च पञ्चमेऽङ्के गरुडः जीमूतवाहनस्य महानुभावं ज्ञात्वानुतप्तः सर्पभक्षणात्सर्वथा विरराम। जीमूतवाहनश्च गरुडेनार्धभक्षितोऽपि भवान्याः प्रसादत्संजिजीव। सर्वे च सुखिनोऽभवन्। एवं महात्मनां त्यागमयेन चरितेन हिंस्रा अपि प्राणिनो दयादाक्षिण्यमनुसरन्तीति प्रधानं प्रतिपाद्यमस्य नाटकस्य।

**जीमूतवाहनः–** मित्रावसो, पश्य, पश्य, शरत्समयपाण्डुभिः पयोदपटलैः प्रावृताः प्रालेयाचलशिखरश्रियमुद्वहन्त्येते मलयसानवः।

**मित्रावसुः–** नैवामी मलयसानवः, नागानामस्थिसंघाताः खल्वमी।

**जीमूतवाहनः–** ( सोद्वेगम् ) कष्टम्। किंनिमित्तममी संघातमृत्यवो जाताः?

**मित्रा०–** कुमार नैवामी संघातमृत्यवः। श्रूयतां यथैतत्। पुरा किल स्वपक्षपवनापास्तसमस्तसागरजलस्तरसा रसातलादुद्‌धृत्य भुजङ्गमाननुदिनमाहारयति स्म वैनतेयः।

**जीमूत०–** ( सोद्वेगम् ) कष्टम्, अतिदुष्करं करोति। ततस्ततः?

**मित्रा०–** ततः सकलनागविनाशाऽऽशङ्किना वासुकिना गरुत्मानभिहितः।

**जीमूत०–** ( सादरम् ) किं, मां प्रथमं भक्षयेति?

**मित्रा०–** नहि नहि।

**जीमूत०–** किमन्यत्?

**मित्रा०**— इदमुक्तम् ' त्वदभिसम्पातसन्त्रासात् सहस्रशः स्रवन्ति भुजङ्गमाङ्गनानां गर्भाः। शिशवश्च पञ्चत्वमुपयान्ति, एवञ्च सन्ततिविच्छेदादस्माकं तवैव स्वार्थहानिर्भवेत् यदर्थमभिपतति भवान् नागलोकम्। तदिह नागमेकैकमनुदिनं प्रेषयामि ' ।

**जीमूत०**— कष्टमेव रक्षिता नागराजेन पन्नगाः।

**जिह्वासहस्रद्वितयस्य मध्ये नैकापि सा तस्य किमस्ति जिह्वा ?**
**एकाहिरक्षार्थमहिद्विषेऽद्य दत्तो मयात्मेति यया ब्रवीति ॥१॥**

**मित्रा०**— प्रतिपन्नं तत्पक्षिराजेन।

**इत्येष भोगिपतिना विहितव्यवस्थो**
**यान् भक्षयत्यहिपतीन् पतगाधिराजः।**
**यास्यन्ति यान्ति च गताश्च दिनैर्विवृद्धिं**
**तेषाममी तुहिनशैलरुचोऽस्थिकूटाः ॥२॥**

**जीमूत०**— आश्चर्यम् !!!

**सर्वाशुचिनिधानस्य कृतघ्नस्य विनाशिनः।**
**शरीरकस्यापि कृते मूढाः पापानि कुर्वते ॥३॥**

अहो ! कष्टमनवसानेयं विपत्तिर्नागानाम्। [ आत्मगतम् ] अपि शक्नुयामहं स्वशरीरसमर्पणेन एकस्यापि नागस्य प्राणपरिरक्षां कर्तुम् ?

[ ततः प्रविशति प्रतीहारः ]

**प्रतीहारः**— आरूढोऽस्मि गिरिशिखरं, यावन्मित्रावसुमन्विष्यामि। ( परिक्रम्य ) अयं मित्रावसुर्जामातुः समीपे तिष्ठति। ( उपसृत्य ) विजयेतां कुमारौ।

**मित्रा०**— सुनद, किन्निमित्तमिहागमनम् ?

**प्रतीहारः**— [ कर्णे कथयति ]

**मित्रा०**— कुमार, तातो मामाह्वयति।

जीमूत०— गम्यताम् ।

मित्रा०— कुमारेणापि बहुप्रत्यवायेऽस्मिन् प्रदेशे न चिरं स्थातव्यम् ।

[ निष्क्रान्तः ]

जीमूत०— यावदहमप्यस्माद्गिरिशिखरादवतीर्य समुद्रतटमवलोकयामि ।

[ परिक्रामति ]

[ नेपथ्ये ]— हा पुत्रक शङ्खचूड ! कथं व्यापाद्यमानोऽद्य किल त्वं मया प्रेक्षितव्यः ?

जीमूत०— आकर्ण्य, अये योषित इव आर्तप्रलापः ! केयम् ? कुतो वास्या भयम् इति स्फुटीकरिष्ये ! [ परिक्रामति ]

[ ततः प्रविशति रुदत्या वृद्धयानुगम्यमानः शंखचूडः गोपायितवस्त्रयुगलश्च किंकरः ]

वृद्धा— ( सास्रम् ) हा पुत्रक शङ्खचूड, कथं व्यापाद्यमानोऽद्य किल त्वं मया प्रेक्षितव्यः ? अनेन मुखचन्द्रेण विरहितमिदानीमन्धकारीभविष्यति पातालम् ।

शङ्ख०— अम्ब, किमिति वैक्लव्येन सुतरां नः पीडयसि ?

वृद्धा— [ निर्वर्ण्य । पुत्रास्याङ्गानि स्पृशन्ती ] हा पुत्र कथं ते अदृष्टसूर्यकिरणं सुकुमारं शरीरं निर्घृणहृदयो गरुड आहारयिष्यति ?

[ कण्ठे गृहीत्वा रोदिति ]

शङ्ख०— अम्ब, अलं परिदेवितेन पश्य—

**क्रोडीकरोति प्रथमं यदा जातमनित्यता ।**
**धात्रीव, जननी पश्चात्तदा शोकस्य कः क्रमः ॥४॥**

( गन्तुमिच्छति )

वृद्धा— पुत्र, तिष्ठ मुहूर्तम् । यावत्ते वदनं प्रेक्षे ।

किङ्करः— एहि कुमार शङ्खचूड ! किं ते एतया भणत्या ? पुत्रस्नेहमोहिता खल्वेषा, न जानाति राजकार्यम् ।

शङ्ख०— अयमागच्छामि ।

किङ्कर:— ( अग्रतोऽवलोक्य ) आनीतः खल्वेष मया वध्याशिलासमीपे, तद् वध्यचिह्नं दास्यामि ।

जीमूत०— इयमसौ योषिद् । ( शङ्खचूडं दृष्ट्वा ) नूनमनेन अस्याः सुतेन भवितव्यम् । तत्किमाक्रन्दति ? ( समन्तादवलोक्य ) न खल्वस्या भय-कारणं किञ्चित्पश्यामि । कुतोस्या भयमिति ? यावदुपसर्पामि । प्रसक्त एवायमेतेषामालापः, कदाचिदत एवास्याभिव्यक्तिर्भविष्यति । तद्विटपान्ता-रितस्तावच्छृणोमि ।

किङ्कर:— ( सास्रम्, कृताञ्जलिः ) कुमार शङ्खचूड ! एष स्वामिन आदेश इति कृत्वा ईदृशं निष्ठुरं मन्त्र्यते ।

शङ्ख०— भद्र, कथय !

किङ्कर:— नागराजो वासुकिः आज्ञापयति ।

शङ्ख०— ( शिरस्यञ्जलिं बद्ध्वा सादरम् ) किमाज्ञापयति देवः ।

किङ्कर:— इदं रक्तांशुकयुगलं परिधाय आरोह वध्यशिलां, येन रक्तांशुक-मुपलक्ष्य गरुड आहारयिष्यति इति ।

जीमूत०— कथमसौ वासुकिना परित्यक्तः ?

किङ्कर:— कुमार, गृहाणैतद्वसनयुगलम् । ( इत्यर्पयति )

शङ्ख०— [ सादरम् ] उपनय । ( गृहीत्वा ) शिरसि स्वाम्यादेशः ।

वृद्धा— ( पुत्रस्य हस्ते वाससी दृष्ट्वा सोरस्ताडम् ) हा वत्स ! इदं खलु वज्रपातसन्निभं सम्भाव्यते । [ मोहं गता ]

किङ्कर:— आसन्ना गरुडागमनवेला, तल्लघु गच्छामि । [ निष्क्रान्तः ]

शङ्ख०— अम्ब ! समाश्वसिहि ।

वृद्धा— ( समाश्वस्य सास्रम् ) हा पुत्रक हा मनोरथशतलब्ध ! क्व पुनस्त्वां प्रेक्षिष्ये ?

**जीमूत०**— अहो नैर्घृण्यम् गरुडस्य ! अपि च—

**मूढाया मुहुरश्रुसन्ततिभुवः कृत्वा प्रलापान्बहून्**
**कस्त्राता तव पुत्रकेति कृपणं दिक्षु क्षिपन्त्या दृशम् ।**
**अङ्के मातुरवस्थितं शिशुमिमं त्यक्त्वा घृणामश्नतः**
**चञ्चुर्नैव, खगाधिपस्य हृदयं वज्रेण मन्ये कृतम् ॥५॥**

**शङ्ख०**— ( आत्मनोऽश्रूणि निवारयन् ) अम्ब ! किमिति वैक्लव्येन ?

**यैरत्यन्तदयापरैर्न विहिता वन्ध्यार्थिनां प्रार्थना**
**यैः कारुण्यपरिग्रहान्न गणितः स्वार्थः परार्थं प्रति ।**
**ये नित्यं परदुःखदुःखितधियस्ते साधवोऽस्तं गता**
**मातः संहर बाष्पवेगमधुना कस्याग्रतो रुद्यते ॥६॥**

ननु समाश्वसिहि, समाश्वसिहि ।

**वृद्धा**— ( सास्रम् ) कथं समाश्वसिष्यामि ! किमेकपुत्रक इति कृत्वा सानुकम्पेन नागराजेन प्रेषितोऽसि ? हा ! कथमविच्छिन्ने जीवलोके मम पुत्रकः स्मृतः ? सर्वथाऽहमस्मि मन्दभाग्या । ( मूर्च्छति )

**जीमूत०**— ( सकरुणम् )

**आर्तं कण्ठगतप्राणं परित्यक्तं स्वबन्धुभिः ।**
**त्राये नैनं यदि ततः कः शरीरेण मे गुणः ॥७॥**

तद्यावदुपसर्पामि ।

**शङ्ख०**— अम्ब ! संस्तम्भयात्मानम् ।

**वृद्धा**— हा पुत्रक ! यदा नागलोकपरिरक्षकेण वासुकिना परित्यक्तोऽसि तदा कस्ते अपरः परित्राणं करिष्यति ?

**जीमूत०**— ( उपसृत्य ) नन्वहमहम् ।

**वृद्धा**— ( जीमूतवाहनं दृष्ट्वा ससम्भ्रममुत्तरीयेण पुत्रकमाच्छाद्य नायकमुपसृत्य जानुभ्यां स्थित्वा ) विनतानन्दन ! व्यापादय मामहं ते नागराजेनाहारनिमित्तं परिकल्पिता ।

**जीमूत०**– ( सास्रम् ) अहो पुत्रवात्सल्यम् ! !

**अस्या विलोक्य मन्ये पुत्रस्नेहेन विक्लवत्वमिदम् ।**
**अकरुणहृदयः करुणां कुर्वीत भुजङ्गशत्रुरपि ॥८॥**

**शङ्ख०**– अम्ब ! अलं त्रासेन ! न नागशत्रुः, पश्य—

**महाहिमस्तिष्कविभेदमुक्तरक्तच्छटार्चितचण्डचञ्चुः ।**
**क्वासौ गरुत्मान् ? क्व च सोमसौम्यस्वभावरूपाकृतिरेष साधुः**

**वृद्धा**– अहं खलु तव मरणभीता सर्वमेव लोकं गरुडमयं प्रेक्षे ।

**जीमूत०**– अम्ब मा भैषीः नन्वयमहं विद्याधरस्त्वत्सुतसंरक्षणार्थमेवायातः ।

**वृद्धा**– [ सहर्षम् ] पुत्रक पुनः पुनरेवं भण ।

**जीमूत०**– अम्ब किं पुनः पुनरभिहितेन ? ननु कर्मणैव सम्पादयामि ।

**वृद्धा**– [ शिरस्यञ्जलिं बद्ध्वा ] पुत्रक चिरंजीव !

**जीमूत०**– **ममैतदम्बार्पय वध्यचिह्नं प्रावृत्य यावद्विनताऽऽत्मजाय ।**
**पुत्रस्य ते जीवितरक्षणाय स्वदेहमाहारयितुं ददामि ।१०।**

**वृद्धा**– ( कर्णौ पिधाय ) प्रतिहतममङ्गलम् । त्वमपि शङ्खचूडनिर्विशेषः पुत्रः अथवा शङ्खचूडादप्यधिकतरः य एवं बन्धुजनपरित्यक्तमपि पुत्रकं मे शरीरप्रदानेन रक्षितुमिच्छसि ।

**शङ्ख०**– अहो, जगद्विपरीतमस्य महासत्त्वस्य चारितम् कुतः–

**विश्वामित्रः श्वमांसं श्वपच इव पुराऽभक्षयद् यन्निमित्तं**
**नाडीजङ्घो निजघ्ने कृततदुपकृतिर्यत्कृते गौतमेन ।**
**पुत्रोऽयं काश्यपस्य प्रतिदिनमुरगानत्ति ताक्ष्यो यदर्थं**
**प्राणांस्तानेष साधुस्तृणमिव कृपया यः परार्थं ददाति ।११।**

[ जीमूतवाहनमुद्दिश्य ] भो महासत्त्व! त्वया दर्शिता एवात्मप्रदानव्यवसाया-न्निर्व्याजा मयि कृपालुता । तदलमनेन निर्बन्धेन । पश्य—

**जायन्ते च म्रियन्ते च मादृशाः क्षुद्रजन्तवः ।**
**परार्थे बद्धकक्ष्याणां त्वादृशामुद्भवः कुतः ॥१२॥**

तत्किमनेन निर्बन्धेन ? मुच्यतामयमध्यवसायः ।

**जीमूत०**— शङ्खचूड, न मे चिराल्लब्धावसरस्य परार्थसम्पादनामनोरथस्यान्तरायं कर्तुमर्हसि । तदलं विकल्पेन । दीयतामेतद्वध्यचिह्नम् ।

**शङ्ख०**— भो महासत्त्व । किमनेन वृथाऽऽत्मायासेन ? न खलु शङ्खधवलं शङ्खपालकुलं शङ्खचूडो मलिनीकरिष्यति । यदि ते वयमनुकम्पनीयाः तादियमस्मद्विपत्तिविक्लवा न यथा जीवितं जह्यात् तथाऽभ्युपायश्चिन्त्यताम् ।

**जीमूत०** किमत्र चिन्त्यते । चिन्तित एवाभ्युपायः । स तु त्वदायत्तः ।

**शङ्ख०**— कथमिव ।

**जीमूत०**— **म्रियते म्रियमाणे या त्वयि जीवति जीवति ।**
**तां यदीच्छसि जीवन्तीं रक्षात्मानं ममासुभिः ॥१३॥**

अयमभ्युपायः । तदर्पय त्वरितं वध्यचिह्नं, यावदनेनात्मानं प्रच्छाद्य वध्यशिलामारोहामि, त्वमपि जननीं पुरस्कृत्य अस्माद्देशान्निवर्तस्व कदाचिदम्बा अवलोक्य सन्निकृष्टं घातस्थानं स्त्रीस्वभावकातरत्वेन जीवितं जह्यात्; किं न पश्यति भवानिदं विपन्नपन्नगानेककङ्कालसङ्कुलं महाश्मशानम् ?

**शङ्ख०**— कथं न पश्यामि ?

**प्रतिदिनमशून्यमहिनाऽऽहारेण विनायकाहितप्रीति ।**
**शशिधवलास्थिकपालं वपुरिव रौद्रं श्मशानमिदम् ॥१४॥**

**जीमूत०**— शङ्खचूड ! तद् गच्छ किमेभिः सामोपन्यासैः ?

**शङ्ख०**— आसन्नः खलु गरुडस्यागमनसमयः । [ मातुरग्रतो जानुभ्यां स्थित्वा ] अम्ब ! त्वमपि निवर्तस्वेदानीम् ।

**समुत्पस्यामहे मातर्यस्यां यस्यां गतौ वयम् ।**
**तस्यां तस्यां प्रियसुते ! माता भूयास्त्वमेव नः ।** [पादयोः पतति]

**वृद्धा**— [ सास्रम् ] कथमस्य पश्चिमं वचनम् ? पुत्रक ! न खलु त्वामुज्झित्वा मे पादावन्यतो वहतः, तदिहैव त्वया सह स्थास्यामि ।

**शङ्ख०**– [ उत्थाय ] जवादहमप्यदूरे भगवन्तं दक्षिणगोकर्णं प्रदक्षिणीकृत्य स्वाम्यादेशमनुतिष्ठामि । [ उभौ निष्क्रान्तौ ]

**जीमूत०**– कष्टम्, न सम्पन्नमभिलषितम् । तत्कोऽत्राभ्युपायः ?

(अत्रान्तरे कञ्चुकी समागत्य जीमूतवाहनाय रक्तं वासोयुगं कुलाचार इति मित्रावसुजनन्या प्रेषितं समर्पयति । )

**वासोयुगमिदं रक्तं प्राप्तकाले समागतम् ।**
**महतीं प्रीतिमाधत्ते परार्थे देहमुज्झतः ॥१५॥**

( दिशोऽवलोक्य ) यथाऽयं चालितमलयाचलशिखरशिलासञ्चयः प्रचण्डो नभस्वान्, तथा तर्कयामि, आसन्नीभूतः खलु पक्षिराज इति । तद्यावदसौ नागच्छेत् शङ्खचूडः तावत्त्वरिततरमिमां वध्यशिलामारोहामि । [ उपविश्य स्पर्शं नाटयति ] अहो स्पर्शोऽस्याः ।

**शयितेन मातुरङ्के विश्रब्धं शैशवे न तत्प्राप्तम् ।**
**लब्धं सुखं मयास्या वध्यशिलाया यदुत्सङ्गे ॥१६॥**

तदयमागतो गरुत्मान्, यावदात्मानमाच्छादयामि । ( तथा करोति )

**जीमूत०**– ( सपरितोषम् )

**संरक्षता पन्नगमद्य पुण्यं मयाऽऽर्जितं यत्स्वशरीरदानात् ।**
**भवे भवे तेन ममैवमेवं भूयात्परार्थः खलु देहलाभः ॥१७॥**

**गरुडः**– [ जीमूतवाहनं निर्वण्य, अभिपत्य तं गृह्णाति । नेपथ्ये पुष्पाणि पतन्ति । दुन्दुभयश्च स्वनन्ति । उर्ध्वं दृष्ट्वाऽऽकर्ण्य च ] अये पुष्पवृष्टिर्दुन्दुभिध्वनिश्च ( सविस्मयम् ) अये—

**आमोदानन्दितालिर्निपतति किमियं पुष्पवृष्टिर्नभस्तः ?**
**स्वर्गे किं वैष चक्रं मुखरयति दिशां दुन्दुभीनां निनादः ।**
**[ विहस्य ] आं, ज्ञातं सोऽपि मन्ये मम जवमरुता कम्पितः पारिजातः ।**
**सर्वैः संवर्तकाभ्रैरिदमपि रसितं जातसंहारशङ्कैः ॥१८॥**

**जीमूत०**– ( आत्मगतम् ) दिष्ट्या कृतार्थोऽस्मि ।

गरुडः— ( जीमूतं कलयन् )

**नागानां रक्षिता भाति गुरुरेव यथा मम ।**
**तथा सर्पाशनाकाङ्क्षां व्यक्तमद्यापनेष्यति ॥१९॥**

तद्यावदेनं गृहीत्वा मलयपर्वतमारुह्य यथेष्टमाहारयामि ।

प्रश्नाः— (१) नागराजः वासुकिः गरुडेन कं समयमकरोत्? (२) जीमूतवाहनः शङ्खचूडं कथमत्रायत? (३) शङ्खचूडः किमिति व्यस्मयत? (४) शरीरं कीदृशं? (५) कुतस्त्यो महानास्थिसमूहः? (६) कस्माद्दिवः पुष्पवृष्टिः? गरुडस्तत्र किमाशङ्कते? (७) कोऽस्य संदर्भस्य सारः?

---

## परिशिष्टम् (१) आवश्यकं छन्दोविज्ञानम्

**पिङ्गलादिभिराचार्यैर्यदुक्तं लौकिकं द्विधा । मात्रावर्णविभेदेन छन्दस्तदिह कथ्यते ॥१॥ सममर्धसमं वृत्तं विषमं च तथापरम् ॥ अङ्घ्रयो यस्य चत्वारः तुल्यलक्षणलक्षिताः । तच्छन्दःशास्त्रतत्त्वज्ञाः समं वृत्तं प्रचक्षते ॥२॥ प्रथमाङ्घ्रिसमो यस्य तृतीयश्चरणो भवेत् । द्वितीयस्तुर्यवद् वृत्तं तदर्धसममुच्यते ॥३॥ यस्य चाङ्घ्रिचतुष्केऽपि लक्ष्म भिन्नं परस्परम् । तदाहुर्विषमं वृत्तं छन्दःशास्त्रविशारदाः ।४। एकमात्रो भवेद् ह्रस्वो द्विमात्रो दीर्घ उच्यते । त्रिमात्रस्तु प्लुतो ज्ञेयो व्यञ्जनं चार्धमात्रकम् । ज्ञेयो लघुर्लकारोऽत्र गकारश्च गुरुर्मतः ॥५॥ संयुक्ताद्यं दीर्घं सानुस्वारं विसर्गसंमिश्रम् । विज्ञेयमक्षरं गुरु पादान्तस्थं विकल्पेन ॥६॥ मस्त्रिगुरुस्त्रिलघुश्च नकारो भादिगुरुः पुनरादिलघुर्यः । जो गुरुमध्यगतो रलमध्यः सोऽन्तगुरुः कथितोऽन्तलघुस्तः ॥७॥**

**यस्याः प्रथमे पादे द्वादश मात्रास्तथा तृतीयेऽपि । अष्टादश द्वितीये चतुर्थके पञ्चदश सार्या ॥१॥ आर्यापूर्वार्धसमं द्वितीयमपि**

भवति सा गीतिः ॥२॥ आर्योत्तरार्धतुल्यं प्रथमार्धमपि प्रयुक्तं चेत्। छन्दसि तामुपगीतिं प्रकाशयन्ते महाकवयः ॥३॥ श्लोके षष्ठं गुरु ज्ञेयं सर्वत्र लघु पञ्चमम्। द्विचतुष्पादयोर्ह्रस्वं सप्तमं दीर्घमन्ययोः ४ पञ्चमं लघु सर्वत्र सप्तमं द्विचतुर्थयोः। षष्ठं गुरु विजानीयात् एतत्पद्यस्य लक्षणम् ॥५॥ स्यादिन्द्रवज्रा यदि तौ जगौ गः ॥६॥ उपेन्द्रवज्रा जतजास्ततो गौ ॥७॥ अनन्तरोदीरितलक्ष्मभाजौ पादौ यदीयावुपजातयस्ताः।८। शालिन्युक्ता म्तौ तगौ गोऽब्धिलोकैः।९। रान्नराविह रथोद्धता लगौ ॥१०॥ स्वागता रनभगैर्गुरुणा च।११। दोधकवृत्तमिदं भभभाद्गौ १२ इह तोटकमम्बुधिसैः प्रमितम् १३ जतौ तु वंशस्थमुदीरितं जरौ १४ द्रुतविलम्बितमाह नभौ भरौ १५ भुजङ्गप्रयातं चतुर्भिर्यकारैः १६ म्नौ ज्रौ गस्त्रिदशयतिः प्रहर्षिणीयम् १७ सजसा जगौ भवति मञ्जुभाषिणी १८ उक्ता वसन्ततिलका तभजा जगौ गः १९ ननमयययुतेयं मालिनी भोगिलोकैः २० रसै रुद्रैश्छिन्ना यमनसभला गः शिखरिणी ॥२१॥ जसौ जसयला वसुग्रहयतिश्च पृथ्वी गुरुः ॥२२॥ मन्दाक्रान्ताम्बुधिरसनगैर्मो भनौ तौ गयुग्मम् ॥२३॥ नसमरसला गः षड्वेदैर्हयैर्हरिणी मता ॥२४॥ सूर्याश्वैर्यदि मः सजौ सततगाः शार्दूलविक्रीडितम् ॥२५॥ म्रभ्नैर्यानां त्रयेण त्रिमुनियतियुता स्रग्धरा कीर्तितेयम् ॥२६॥ विषमे ससजा गुरुः समे सभरा लोऽथ गुरुर्वियोगिनी (वैतालीयम्) ॥२७॥ अयुजि नयुगरेफतो यकारो युजि च नजौ जरगाश्च पुष्पिताग्रा २८ प्रथमे सजौ यदि सलौ च नसजगुरुकाण्यनन्तरम्। यद्यथ भनजलगाः स्युरथो सजसा जगौ भवतीयमुद्गता ॥२९॥

## परिशिष्टम् (२) आवश्यकानि व्याकरणसूत्राणि

येनाक्षरसमाम्नायमधिगम्य महेश्वरात्। कृत्स्नं व्याकरणं प्रोक्तं तस्मै पाणिनये नमः ॥१॥ येन धौता गिरः पुंसां विमलैः शब्दवारिभिः। तमश्चाज्ञानजं भिन्नं तस्मै पाणिनये नमः ॥२॥

१ अइउण्। २ ऋऌक्। ३ एओङ्। ४ ऐऔच्। ५ हयवरट्। ६ लण्। ७ ञमङणनम्। ८ झभञ्। ९ घढधष्। १० जबगडदश्।

११ खफछठथचटतव्। १२ कपय्। १३ शषसर्। १४ हल् इति माहेश्वराणि प्रत्याहारसूत्राणि वर्णसमाम्नायश्च। एषामन्त्यव्यंजनानि इत्संज्ञकानि।

**प्रत्याहारोपयोगीनि सूत्राणि–** हलन्त्यम्। आदिरन्त्येन सहेता। तस्य लोपः।

**संज्ञासूत्राणि–** वृद्धिरादैच्। अदेङ् गुणः। हलोऽनन्तराः संयोगः। मुखनासिकावचनोऽनुनासिकः। तुल्यास्यप्रयत्नं सवर्णम्। ईदूदेद्द्विवचनं प्रगृह्यम्। इग्यणः संप्रसारणम्। अर्थवदधातुरप्रत्ययः प्रातिपदिकम्। यू स्त्र्याख्यौ नदी। ह्रस्वं लघु। संयोगे गुरु। दीर्घं च। सुप्तिङन्तं पदम्। बहुषु बहुवचनम्। द्व्येकयोर्द्विवचनैकवचने। परः संनिकर्षः संहिता। विरामोऽवसानम्।

**कारकसूत्राणि–** स्वतन्त्रः कर्ता। कर्तुरीप्सिततमं कर्म। साधकतमं करणम्। कर्मणा यमभिप्रैति स संप्रदानम्। रुच्यर्थानां प्रीयमाणः। धारेरुत्तमर्णः। स्पृहेरीप्सितः। क्रुधद्रुहेर्ष्यासूयार्थानां यं प्रति कोपः। क्रुधद्रुहोरुपसृष्टयोः कर्म। ध्रुवमपायेऽपादानम्। भीत्रार्थानां भयहेतुः। पराजेरसोढः। आधारोऽधिकरणम्। अधिशीङ्स्थासां कर्म। उपान्वध्याङ्वसः।

**विभक्तिसूत्राणि–** कर्मणि द्वितीया। अन्तरान्तरेण युक्ते। कालाध्वनोरत्यन्तसंयोगे। अपवर्गे तृतीया। कर्तृकरणयोस्तृतीया। सहयुक्तेऽप्रधाने। येनाङ्गविकारः। चतुर्थी संप्रदाने। नमः स्वस्तिस्वाहास्वधालंवषड्योगाच्च। अपादाने पञ्चमी। पृथग्विनानानाभिस्तृतीयान्यतरस्याम्। सप्तम्यधिकरणे च। षष्ठी शेषे।

**आत्मनेपदसूत्राणि–** नेर्विशः। विपराभ्यां जेः। समवप्रविभ्यः स्थः। समो गम्यृच्छिभ्याम्। निसमुपविभ्यो ह्वः। स्पर्धायामाङः। भुजोऽनवने।

**परस्मैपदसूत्राणि–** व्याङ्परिभ्यो रमः। उपाच्च। वृद्भ्यः स्यसनोः।

**सन्धिसूत्राणि–** इको यणचि। एचोऽयवायावः। आद्गुणः। अकः सवर्णे दीर्घः। वृद्धिरेचि। प्लुतप्रगृह्या अचि नित्यम्। यरोऽनुनासिकेऽनुनासिको वा। विसर्जनीयस्य सः। एङः पदान्तादति। ढो ढे लोपः। रो रि। ढ्रलोपे

पूर्वस्य दीर्घोऽणः । झलां जशोऽन्ते । झलां जश् झशि । खरि च । रषाभ्यां नो णः समानपदे । अट्कुप्वाङ्नुम्व्यवायेऽपि । पदान्तस्य । अपदान्तस्य मूर्धन्यः । इण्कोः । आदेशप्रत्यययोः ।

## संस्कृतभाषा–चतुर्थ–परीक्षा प्रश्नपत्रगुणादिविवरणम्

**नियुक्तं पाठ्यपुस्तकम्**– गद्यपद्यमालायाः चतुर्थं कुसुमम् ।

प्रश्नपत्राणि त्रीणि, प्रथमद्वितीयप्रश्नपत्रयोः प्रत्येकं शतं गुणाः, होरात्रयं च समयः, तृतीये प्रश्नपत्रे लेखेनाशीतिर्गुणाः, सार्धहोराद्वयं समयः ।

**प्रथमं प्रश्नपत्रम्**— चतुर्थकुसुमस्य पद्यविभागः (अष्टौ पाठाः १ तः ८) ४०. वृत्तज्ञानम् (पाठ्यपुस्तकीयपद्यानां १४१ पृष्ठे १ परिशिष्टे निर्दिष्टमनुसृत्य) १५, कण्ठीकृताः श्लोकाः (नवमः पाठः) १५, संस्कृतपद्यान्तराणां मातृभाषायामनुवादः १०, रूपात्मकं व्याकरणम् २०.

**द्वितीयं प्रश्नपत्रम्**– चतुर्थकुसुमस्य गद्यविभागः (अष्टौ पाठाः १० तः १७) ४०, पाठ्यपुस्तकीयकविपरिचयः विशेषशब्दार्थटिप्पण्यश्च संस्कृतेन २०, प्रयोगपरिवर्तनं, सन्धिः, समासः, विग्रहः, उपसर्गाव्ययादीनां वाक्ये उपयोगः २०, संस्कृतगद्यान्तरस्य मातृभाषायां मातृभाषातः संस्कृते चानुवादः २०.

**तृतीयं प्रश्नपत्रम्**– चतुर्थकुसुमे नाट्यविभागः (१८ तः २३ षट् पाठाः) २५, पाठ्यपुस्तके १४२ पृष्ठे २ परिशिष्टनिर्दिष्टानां व्याकरणसूत्राणामर्थविरणोदाहरणादि १५, संस्कृतगद्यान्तरस्य मातृभाषायामनुवादः १०, संस्कृतभाषायां निबन्धकथापत्रसंवादादिलेखनं २०.

**मौखिकी परीक्षा**– कण्ठीकरणार्थं नियुक्तानां श्लोकानां पठनं, गद्यवाचनं, संस्कृतेन सभाषणं अर्थविवरणम् च २०.

प्रतिप्रश्नपत्रं पाठ्यपुस्तकार्थं ये गुणानिर्धारितास्तेषु $\frac{3}{4}$ गुणाः तत्रत्यांशस्यमातृभाषायामनुवादार्थं तथाच $\frac{1}{4}$ गुणाः पुस्तके प्रतिपाठमन्ते निर्दिष्टानां तत्सदृशानां च प्रश्नानां संस्कृतेनोत्तरलेखनार्थं नियता वर्तन्ते। व्याकरणप्रश्नाः पाठ्यपुस्तकानुसारं प्रष्टव्याः स्युः तत्र च पूर्वपरीक्षाव्याकरणज्ञानमपेक्षितं स्यात् ।

# टिळक-महाराष्ट्र-विद्यापीठम्

## संस्कृत-परीक्षाणां परिचयः ।

( १ ) टिळक-महाराष्ट्र-विद्यापीठेन चतस्रः संस्कृत-भाषा-परीक्षाः, पञ्च संस्कृतशास्त्रपरीक्षाः च प्रचाल्यन्ते ।

( २ ) भाषा-परीक्षाश्चतस्रः- १ प्रथमा, २ द्वितीया, ३ तृतीया, ४ चतुर्थी-परीक्षा इति । प्रतिपरीक्षं गद्यपद्यमालायाः प्रथमं, द्वितीयं, तृतीयं, चतुर्थं चेति चत्वारि कुसुमानि यथाक्रमं पाठ्यपुस्तकानि नियुक्तानि प्रकाशितानि च विद्यन्ते । प्रतिपुस्तकं कियाँश्चैव भागः कण्ठपाठार्थं नियुक्तः पृथङ्निर्दिष्टश्च । पाठानुसारि व्याकरणं परीक्षायामावश्यकं भवति ।

( ३ ) सुयोग्यः विद्यार्थी पूर्व-परिक्षामनुत्तीर्यापि द्वितीयायां तृतीयायां वा अधिकं संमतिशुल्कं प्रदाय परीक्ष्यत्वेन उपस्थातुमर्हति ।

( ४ ) प्रथमा, द्वितीया, तृतीया एताः परीक्षाः संवत्सरस्य द्विः (फेब्रुवारी-ऑगष्टमासयोः) भवन्ति । चतुर्थीपरीक्षा वर्षस्य एकवारमेव ऑगष्ट मासे भवत् ।

( ५ ) परीक्षा-शुल्कं प्रथमायाः एको रूप्यकः, द्वितीयायाः सार्धो रूप्यकः, तृतीयाया द्वौ रूप्यकौ, चतुर्थीपरीक्षायाश्च रूप्यकत्रयं भवेत् ।

( ६ ) संस्कृत-चतुर्थी-परीक्षोत्तीर्णः 'संस्कृतभाषाभिज्ञ' इत्युपाधिं विन्देत, प्रवेशादि-शास्त्रपरीक्षासु उपवेष्टुमर्हति च । तत्र शास्त्रपरीक्षासु कोविद एस्. एस्. सी. समाना, विशारदपरीक्षा बी. ए. समाना, पारंगत-परीक्षा च एम्. ए. समाना इति मुंबईप्रदेशराज्याधिकारिभिर्निर्धारितं वर्तते ।

( ७ ) शास्त्र-परीक्षाध्यापनार्थं टि. म. विद्यापीठेन पुण्यपत्तने संस्कृतमहाविद्यालयः प्रचालितोऽस्ति तत्र निःशुल्कमध्यापनं सुयोग्यविद्यार्थिनां निवासशिष्यवृत्यादिव्यवस्था कृता भवति । भाषापरीक्षाध्यापनार्थमपि प्रतिषण्मासं निःशुल्कवर्गाः प्रचाल्यन्ते ।

( ८ ) एतासां परीक्षाणामधिकपरिचयार्थं केन्द्रनियमाद्यर्थं च आणकद्वयं 'पोष्ट स्टँप' रूपेण अधोनिर्दिष्ट-मुखविलासे प्रेषणीयम् ।

मन्त्री, संस्कृत-विद्या-मण्डलम्

टिळक-महाराष्ट्र-विद्यापीठ, पुणें २.

## टिळक-महाराष्ट्र-विद्यापीठ-ग्रंथमाला

### संस्कृत

| | | |
|---|---|---|
| १ गद्य-पद्य-माला | प्रथमं कुसुमम् | ०- ६-० |
| २ गद्य-पद्य-माला | द्वितीयं कुसुमम् | ०- ८-० |
| ३ गद्य-पद्य-माला | तृतीयं कुसुमम् | ०-१२-० |
| ४ गद्य-पद्य-माला | चतुर्थं कुसुमम् | १- ४-० |

### मराठी

१ संस्कृत वाङ्मयाचा त्रोटक इतिहास १-८-०
लेखक-विद्वत्कुलशेखर चिं. वि. वैद्य
एम्. ए., एलएल. बी.

२ अल्बेरुणीची गीता व इतर निबंध १-०-०
लेखक-आचार्य वि. प्र. लिमये
वाङ्मय-विशारद

३ ऋग्वेदकालीन सांस्कृतिक इतिहास २-०-०
लेखक-चिं. ग. काशीकर,
वाङ्मय-पारंगत

तसेंच इतरहि आधुनिक शास्त्रीय मराठी पुस्तकें विद्यापीठानें प्रकाशित केलीं आहेत.

टिळक महाराष्ट्र विद्यापीठ
५२१ सदाशिव, पुणें २.